॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला

२३

॥ श्रीः ॥

# काव्यप्रबन्धः

काव्यपदार्थविवृत-कविसमयादिनिरूपणात्मकः

रचयिता—

गढवालटिहरीराज्यान्तर्गतजाखोलीभरदारवास्तव्यदैवज्ञपण्डितश्रीतारादत्तशर्म-

भट्टात्मजटिहरीराजकीयसंस्कृतमहाविद्यालयप्रधानाध्यापक-

विद्यालङ्कारदर्शनकेशरीसाहित्याचार्यकाव्यतीर्थ-

पण्डित श्रीबालकृष्णभट्टशास्त्री



चौखम्बा विद्याभवन, वाराणसी २२१००१

॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला
२३

॥ श्रीः ॥

# काव्यप्रबन्धः

काव्यपदार्थविवृत-कविसमयादिनिरूपणात्मकः

रचयिता—
गढवालटिहरीराज्यान्तर्गतजाखोलीभरदारवास्तव्यदैवज्ञपण्डितश्रीतारादत्तशर्म-
भट्टात्मजटिहरीराजकीयसंस्कृतमहाविद्यालयप्रधानाध्यापक-
विद्यालङ्कारदर्शनकेशरीसाहित्याचार्यकाव्यतीर्थ-
पण्डित श्रीबालकृष्णभट्टशास्त्री



चौखम्बा विद्याभवन, वाराणसी २२१००१

प्रकाशक—

चौखम्बा विद्याभवन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६



तृतीय संस्करण १९८५

मूल्य Rs. १५/-

अन्य प्राप्तिस्थान—

चौखम्बा सुरभारती प्रकाशन

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

*

चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

मुद्रक—

श्रीजी मुद्रणालय

वाराणसी

THE

VIDYABHAWAN SANSKRIT GRANTHAMALA

23



# KĀVYAPRABANDHA

*( A treatise dealing with Poetry, Poesy and Imagery etc. of various Poets )*

*By*

**Pt. Balakrishna Bhatta Shastri**

**Sahityacharya, Kavyatirtha**

Ex-Principal,

Govt. Sanskrit College, Tehri ( Garhwal )



CHOWKHAMBA VIDYABHAWAN

VARANASI 221001

# किञ्चिद्विनिवेदनम्

अयि गीर्वाणवाणीविलासप्रणयिनः सहृदयाः ! पाठकमहाभागाः !

जानन्त्येव भवन्तो यदिह भारतभूमौ प्राचीनकालादारभ्यैव यादृक् सर्वत्र सार्वत्रिकः प्रचुरः प्रचारः, सहृदयहृदयैकवेद्यस्य प्रपानकरसवत्प्रत्यक्षमास्वादनोयरसस्य चतुर्वर्गफलप्रदतया मनुष्यमात्रमनोरथसमर्थकस्य लोकव्यवस्थाव्यवस्थापकदर्शितसर्वविषयस्य परमाह्लादजनकस्य मनोहरस्य काव्यस्य तत्परिचायकत्वात्साहित्यशास्त्रस्य च वर्वर्ति, नहि तथाऽन्यस्य कस्यापि शास्त्रचयस्येति। को हि नाम संस्कृतज्ञः हिन्दीभाषाकोविदो वा तेषां सकलसाहित्यनिगूढतत्त्वविदां मम्मट-विश्वनाथ-जगन्नाथप्रभृतीनां तथा कालिदास–भवभूति–माघ–भारवि–श्रीहर्ष–बाणभट्ट–दण्ड्यादीनां प्रथितप्रचुरयशसां संस्कृतकवीनाञ्च नामानि न जानाति। येषां काव्यपदपदार्थनिरूपणभावपूर्णोऽतिगम्भीरो विचारः, येषाञ्च मानससरोवरसमुद्भूतानि विविधरसभावमयमकरन्दपरागपूर्णानि कविताकनककमलानि सोल्लासं विकासमासाद्य पृथिव्यां सर्वेषामेव सचेतसां चेतांसि चमत्कुर्वन्ति विराजन्ते। इत्यपि नाविदितं विदां यदिदानीं तेषां त एव प्रायः काव्यसाहित्यिकग्रन्था हि सर्वत्र संस्कृतपरीक्षासु पाठ्यत्वेन निर्धारिताः सन्ति, त एव च प्रसिद्धकवयोऽपि परीक्ष्यत्वेन परीक्षकैः पृच्छ्यन्ते। इति मत्वैव मया प्रबन्धोऽयं परीक्षार्थिनां विद्यार्थिनामुपकारदृशैव तानेव ग्रन्थरत्नान् पुरो निधाय साररूपेण विविच्य च पूर्वोत्तरपीठिकाक्रमेण यथामति प्राणायि। अतो यद्येतदवलोकनेन परीक्षार्थिनोऽन्ये चापीदं वाचयितारोऽल्पामप्युपकृतिमासादयेयुस्तर्ह्यात्मनोऽहं परिश्रमं सफलं मन्ये। इति वदतोऽपि

मन्मनसि महान् हर्षः समुदेति यदिदानीं मन्निवेदनानुसारं पुस्तकस्यास्य द्वितीयादिमुद्रण–प्रकाशनभारं स्वनामधन्यैः संस्कृतसाहित्यप्रकाशनप्रचार-सुव्रतैर्विद्यानुरागशीलैः काशीचौखम्बासंस्कृतपुस्तकालयाध्यक्षैः श्रेष्ठिवर्य-बाबूश्रीजयकृष्णदास-हरिदासगुप्तमहोदयैः स्वीकृतमिति तेभ्योऽनन्तधन्यवा-दान् समर्पयामः। अन्ते चेत्थमाशास्महे मानुषमात्रसुलभात्प्रमादाद् बुद्धि-भ्रमाद्वा मुद्रणालयस्य सुदूरत्वात् पूर्वरूपस्य स्वयमनवेक्षणाच्चवात्र समुप-जातानां स्खलितानां प्रबोधनेन मामनुगृह्णन्तु सहृदयाः कारुणिकाः काव्य-कोविदाः, येनाहं यतिष्ये पुनर्मुद्रणे तद्विशुद्धये—इति सशिरः प्रणाम-मभ्यर्थयेऽनुचितं सानुकम्पं क्षमन्तामिति विरम्यते बहूक्त्या। तथाहि—

**मतिवैकल्यतो वापि लिपिमुद्रणतोऽपि वा।**
**दूषणं भूषणमिव शीलयन्तु च सज्जनाः॥**

विदुषामनुचरः—

आचार्यबालकृष्णभट्टशास्त्री

# विषय-सूची

## पूर्वपीठिका

## उत्तरपीठिका

॥ श्रीः ॥

# काव्य-प्रबन्धः

## ( काव्यपदपदार्थकविसमयादिनिरूपणात्मकः )

---

## पूर्वपीठिका

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥
विद्यानिधिं गिरिधरं शिवदं शिवाख्यं, भक्त्या प्रणम्य परया परमेश्वरं च ।
तद्वन्नृसिंहकुशलादिगुरूंश्च तांस्तान्[1], कुर्वे प्रबन्धमथ छात्रहितार्थमेनम् ॥ २ ॥
साहित्यदर्पणादिभ्यः सारमादायसङ्गतः ।
काव्यप्रबन्धः शमदः साहित्यागमसंविदे ॥ ३ ॥

### काव्यम्[2]

जगत्यस्मिन् सन्ति शतशो विघ्नाः; ते चास्माकं सर्वकार्याणामन्तरायभूताः, तैरेव पुनः पुनः प्रतिहन्यमाना वयं बहूनि कर्त्तव्यानि-असम्भवानीति मत्वा परित्यजामः। भवतु, भगवतो लीलाऽतीव विचित्रा, सैव सर्वान् स्वायत्तीकृत्य नृत्याङ्गणेऽस्मिन् नृत्यमयूरीव नर्तयति, सम्मो-

---

१. तान्-तान् इत्यनेन पं० हरिचरण-पं० जगदीश-दैवज्ञ पं० जयदेवघिल्डियाल-पं० रामचन्द्रहीरानन्दशारदाप्रसादमिश्र-सप्ततीर्थादयोऽवधेयाः ।

२. कवेः कर्म काव्यम् । कविः क्रान्तदर्शी मननशीलो दूरद्रष्टेति यास्कमतम् । भगवान् स्वयमपि कविः, 'कविर्मनीषी परिभूः स्वयंभूरिति' तन्नामसु दर्शनात् । 'कविं पुराणमनुशासितारमिति' स्वयं भगवद्वचनाच्च ।

प्रबन्धोऽयं लेखकेन पूर्वं स्वच्छात्रावस्थायामेव लिखितः केवलं सम्प्रति क्वचित्क्वचित्तत्परिवर्धनं परिशोधनमेव च कृतमस्ति ।

ह्रयति, प्रमोदयति, सुखयति, दुःखयति चेति। नेदमपि तिरोहितं तत्रभवतां सहृदयानाम्, यत्तेनैव भगवता कृपालुना जगत्परिसृष्टानामखिलजन्तूनां कृते, अमृतं विषञ्च सर्वमेवेह सुस्थापितं वर्तते। अतः सहृदय-हृदया विज्ञा एव तत्र सांसारिकाणां दुःखानामुच्छेदनोपायस्तेन नूनमेवात्र सन्निधापित इति विमृशन्ति। तत्र दुःखितानां दुखं दूरीकर्त्तुमाधुनिकाः प्राचीना अपि उपायद्वयेनैव समर्था भवन्ति। तथाहि काव्यं हि नाम प्रथम उपायः। स एवात्र वर्णनीयः। सत्यमेव संसारगर्तपतितानामुद्धारकं सुखमयं समुल्लासहेतुर्यदि किमप्यस्ति तर्हि रसेन समुज्जवलद् विविधभावभङ्गिं बिभ्रल्लोकोत्तराह्लादजनकं काव्यमेव। अतः समुचितमुक्तं केनचिद्—

**'न स शब्दो न सा विद्या, न स न्यायो न सा कला।**
**जायते यन्न काव्याङ्गमहो भारो महान् कवेः॥'**

इत्यभियुक्तोक्त्या विश्वेषां विद्यानां स्थानं भावुकानाञ्च समेषां काव्यसंशीलनमित्यायातं भवति। तेनैवास्माकं सुखेन चतुर्वर्गफलप्राप्तिरपि भवतीति श्रीविश्वनाथेन प्रदर्शितम्। तथाहि—

**'चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥'**

अपि च— धर्मार्थकाममोक्षाख्यैश्चतुर्भिः पुरुषार्थैश्चतुर्वर्गः, दृश्यते च लोकानां चतुष्टयी प्रवृत्तिः। यथा केचन धर्मे, अन्येषामर्थे, इतरेषां कामे, परेषां पुनर्महात्मनां वीतरागभयक्रोधानां मोक्षे परमपुरुषार्थे। तेषां प्रतिपादकानि च श्रुतिस्मृतिपुराणेतिहासार्थशास्त्रकामसूत्रोपनिषदारण्यककाव्यानि। तत्र मन्त्रब्राह्मणस्वरूपस्य वेदस्य तदनुसारिण्याः स्मृतेश्च दुर्ज्ञेयत्वात्—नीरसत्वाद् भ्रान्तेः पुरुषधर्मत्वेन किञ्चिदतिक्रमे प्रत्यवायस्मरणाच्च सर्गश्च प्रतिसर्गश्चेति पुराणस्य, तथा—

**'धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्।**
**पूर्ववृत्तकथाकल्पमितिहासं प्रचक्षते॥'**

इत्येवं रूपस्येतिहासस्य ताटस्थ्येन, एवं कृते-इदमिष्टमनिष्टं वा भवति–इति बोधनात्–अर्थशास्त्रविषये तु—**'स तु तत्र विशेषदुर्लभः**

**सदुपन्यस्यति कृत्यवर्त्म यः'** इति नितरां दौर्लभ्यात्कृत्यवर्त्मसदुपन्यासकारिणाम्, मोक्षोपयोगिनामुपनिषदादीनां वेदमूलकत्वेन उक्तरीतेः सुकुमाराशयवतां क्लेशभीरूणां विनेयानां राजधनिकपुत्राणां न चित्ताकर्षकत्वम्। तस्माद् भारतीयसभ्यतासंरक्षणमार्षमार्गप्रदर्शनपुरस्सरं पुरुषैकनिष्पाद्यं चतुर्वर्गसाधनमपि सुखेन सर्वेषां काव्येनैव भवतीति फलितम्। अत उक्तं—

**'कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।**
**आह्लाद्यमृतवत्काव्यमविवेकगदापहम् ॥'**

सत्यमेवोक्तं साहित्यदर्पणकारेण यत्काव्यस्य पाठेन सर्वं सिध्यति। अयमाशयः—शब्दस्तावत्त्रिधा—प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्च। तत्राद्यः शब्दप्रधानः प्रवर्तनाप्राधान्येन विधिरूपो वेदादिः। द्वितीयस्तु पुराणेतिहासादिरर्थतात्पर्यवानर्थवादरूपः। तृतीयस्तु व्यञ्जनारूपव्यापारनिष्पाद्यरसादिव्यक्तिनिष्पादकतया शब्दार्थयोर्द्वयोरपि गुणत्वात्ताभ्यां विलक्षणः काव्यरूपः। जगति काव्यस्य प्रादुर्भावो हि रामादिवत्प्र० इत्युपदेशद्वारा विनेयानां राजपुत्रादीनां विनयसम्पादनाय। तथाहि–**'रामादिवत्प्रवर्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्तिरपि काव्यादेव भवति किं पुनः काव्येनैव'** गृहान्निर्गतो गृहमागच्छति, गृहवासी वनं गच्छति, शान्तचितो युद्धाय, कलहप्रियः शान्त्यर्थश्चाभिलषति। का कथा काव्यस्य महिम्नः? अपूर्वशक्तिशाली काव्यसमुच्चयः, काव्ये सर्वस्यापि विषयस्य सन्निवेशत्वात्। यतो हि काव्ये वेदानां तथोपनिषदामपि वर्णनं यत्र दृश्यते, काव्ये तन्त्रविद्याया अपि स्थानम्, न्यायशास्त्रस्यापि बहवः सिद्धान्ता दृश्यन्ते। मन्ये, काव्यशास्त्रे सर्वाण्येव वस्तूनि पिहितानि सततं विराजन्ते। अत उक्तं–

**'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।'**

को न जानाति चित्तानन्दजनिका हृदयाह्लादकारिका सहृदयहृदयहारिपरिशैलीलसिता प्रेमवाहिनी रससञ्चारिणी कामिनीव हावभावकटाक्षभुजाक्षेपप्रभृतिभिः, रसास्वादसुखपरम्परां जनयन्ती कवीनां कवितेति, सैव हि जडमपि विज्ञायति, निर्बलं सबलयति, निरुत्साहिनं

समुत्साहयति, अमलं यशस्तनोति, व्यवहारिणां व्यवहारपरिष्यन्द-सौन्दर्यं प्रसारयति, निरञ्जनं रञ्जयति, निर्धनं धनयति, दुःखिनं सुखयति, किमन्यत्, **'काव्यसम्बन्धिनी कीर्तिः स्थायिनी निरपायिनी'** तदित्थं काव्यं सर्वथा सर्वैः ज्ञातव्यम् ।

अथ किन्तावत्काव्यं यदर्थमेतावान् प्रस्तावः । इति जिज्ञासायां सन्त्यत्राचार्याणां मतभेदा इत्यभिधाय तत्र पूर्वं सामान्यत एव श्रीमतां मनोविनोदाय केषाञ्चिन्मतान्येवात्र स्वरूप उदाह्रियन्ते । यथा—

**'सालङ्कारं सगुणं दोषव्रातेन सर्वथा रहितम् ।**
**सरसं काव्यरसज्ञैरुदीर्यते भावसुन्दरं काव्यम् ॥'**

'अलङ्कुर्वन्ति शब्दजातमर्थजातमुभयजातं वा ये तेऽलङ्कारास्तैरुपेतम्' बाह्याभ्यन्तरवैशेषिकगुणानुगतं, पदवाक्यवाक्यार्थदोषरहितं, श्रृङ्गारादिनवरसरुचिरं, सुन्दरलोकातिशयिभावभावितं यत्तदेव काव्यमिति फलितोऽर्थः, सिद्धान्तितश्च । तदुक्तं च वाग्देवतावतारेण भगवता श्रीमम्मटभट्टाचार्येण काव्यप्रकाशे—**'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'**[1] सरस्वतीकण्ठाभरणकारस्तु—**'निर्दोषगुणवत्काव्यमलङ्कारैरलङ्कृतम्'—रसात्मकम् ।** चन्द्रालोके कविवरजयदेवस्तु **'निर्दोषा लक्षणवती सरीतिर्गुणभूषिता । सालङ्काररसानेकवृत्तिर्वा काव्यनामभाक् ।'** रसगङ्गाधरकारः पण्डितराजजगन्नाथस्त्वित्थम्—**'रमणीयार्थप्रतिपादकः शब्दः काव्यम् ।'** दर्पणकारो महापात्रो विश्वनाथस्तु **'वाक्यं रसात्मकं काव्यम्'** इत्थमनेके—आचार्या अत्र विप्रतिपद्यन्ते । विस्तारभयात्सर्वमतानि नैवात्र लिख्यन्ते । अस्तु, काव्यं कर्त्तव्यं सर्वैः ज्ञातव्यम्, तच्च लोकोत्तराह्लादजनकं सहृदयसंवेद्यं सरलं सर्वमङ्गलमञ्जुलमिति, तदुक्तञ्च—

---

१. 'शब्दार्थौ सहितौ काव्यम्' इति काव्यालङ्कारकारो भामहः । 'इष्टार्थव्यवच्छिन्ना पदावली काव्यम्' इति दण्डी । 'काव्यस्यात्मा ध्वनिः' इति ध्वन्यालोककार आनन्दवर्धनाचार्यः । 'कवयति रसभावान् विमृशतीति कविः तस्य कर्म काव्यम्' इति विद्याधरः । 'साधुशब्दार्थसन्दर्भगुणालङ्कारभूषितम्…' इति वाग्भट्टः । 'रीतिरात्मा काव्यस्य', 'वक्रोक्तिकाव्यजीवितमि'त्यादीनि ।

साहित्यशास्त्रपरिहीनपरिश्रमाणां,
व्यर्थोऽन्यशास्त्रविषये गमनप्रयासः ।
जात्या द्विजोऽपि न पुनर्विधिनोपवीती,
सोमादियज्ञनिवहैः किमसौ करोतु ॥ १ ॥
साहित्यशास्त्रमधुपानसुखादपि स्याद्,
यस्यान्यशास्त्रपरिशीलनमेव साधु ।
किं तर्हि तस्य तपसापकृतं वनान्ते
योगेन वा निजगृहे हरिकीर्तनेन ॥ २ ॥
शब्दाश्रयं च समलङ्कृतमस्तदोषं,
काव्यं रसप्रसवि मत्सरि शब्दशास्त्री ।
श्रुत्वैव तत्र यतते च्युतिलम्भनार्थ-
मुष्ट्रो यथोपवनसीमनि कण्टकार्थम् ॥ ३ ॥

## काव्यप्रयोजनम्

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृत्तये कान्तासम्मिततयोपदेशयुजे ॥ १ ॥**

अर्थात् काव्यं कर्तव्यम् । कस्मै प्रयोजनाय ? यशसे कीर्तिसम्पादनाय । अर्थकृते धनलाभाय । व्यवहारविदे व्यवहारज्ञानाय । शिवेतरक्षतये अमङ्गलदूरीकरणाय । सद्यः श्रवणमात्रेण परनिवृत्तये परमानन्दप्राप्तये । कान्तासम्मिततया रामादिवत्प्रवर्तितव्यं न रावणादिवदित्युपदेशयोगायेति मम्मटाचार्यमतम् । चतुर्वर्गफलप्राप्तये[1] काव्यमिति विश्वनाथमतस्य दिग्दर्शनन्तु प्रागेव कृतम् । साधूक्तं केनचित्--

१. अयं भावः—चतुर्वर्गफलप्राप्तये द्वौ पन्थानौ स्तः । एकः सरलः अपरश्च कठिनः । तत्र ये परिपक्वबुद्धयः सन्ति तेषां तेभ्योऽपि नीरसेभ्यो वेदादिभ्यः शास्त्रेभ्यश्च दुःखादेव तत्प्राप्तिर्भवति । सुकुमारमतीनान्तु तत्र का कथा ? अतः तेषां चतुर्वर्गफलप्राप्तिस्तु काव्यादेवानायासेन भवति । न च परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्ये यत्नो न करणीय इति वाच्यम् ? कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः शितशर्कराप्रवृत्तिः

'ते धन्यास्ते महात्मानः, तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि, ये च काव्येषु कीर्तिताः ॥ १ ॥
जगद्गुरोः कवेर्वाणी कालिदासस्य भामिनी ।
चेतो न हरते कस्य कामिनीव प्रियंवदा ॥ २ ॥

अत आह रुद्रटः—

यतः क्षणध्वंसिनि सम्भवेऽस्मिन्, काव्यादृतेऽन्यत् क्षयमेति सर्वम् ।
अतो महद्भिर्यशसे स्थिराय, प्रवर्त्तितः काव्यकथाप्रसङ्गः ॥३॥

## काव्यफलम्

शब्दात्मकैः सुन्दरनव्यपुष्पैः शब्दात्मकं ब्रह्मसमर्चनं यत् ।
तदेव काव्यस्य फलं प्रदिष्टं, परापरब्रह्मनिरूपणज्ञैः ॥ १ ॥

## काव्यसाधुत्वम्

धर्मानुकूलकथनं धर्ममार्गे नियोजनम् ।
काव्यसाधुत्वमुदितं प्राक्तनैः काव्यकोविदैः ॥ १ ॥
धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्ति प्रीतिश्च साधुकाव्यनिसेवनम् ॥ २ ॥

## काव्यायोजनकारणम्

एकतः शब्दबाहुल्यमन्यतो वृत्तसञ्चयः ।
काव्यस्यायोजनमिदं कथितं काव्यकोविदैः ॥ १ ॥
शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे' ॥ १ ॥

## काव्यभेदाः

वैदिकं लौकिकश्चेति द्विविधं काव्यमुच्यते ।
गद्यपद्यविभेदेन तच्चतुर्धा व्यवस्थितम् ॥ १ ॥

---

साधीयसी न स्यात् । अतः परिणतबुद्धिभिरपि 'अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति काव्याध्ययनमावश्यकम् ।

१. हेतुर्न तु हेतव इत्यत्र मिलितस्यदण्डचक्रादीनामिव कारणत्वं न तु तृणाराणिमणीनामिवेति ध्वनयितुमेव हेतुरित्येकवचनम् ।

काव्यं द्विधा-वैदिकं लौकिकञ्चेति। तत्र वैदिकमीश्वरप्रोक्तं यजुर्वेदशतपथादि। लौकिकमाप्तोक्तं रामायणमहाभारतादि। गद्यपद्यविभेदेन तदुभयं चतुर्विधम्। गद्यं त्रिविधम्। वृत्तगन्धिचूर्णमुत्कलिकाप्रायश्च। पद्यमनेकभेदम् गणमात्राक्षरवृत्तभेदेन छन्दसामानन्त्यात्। पादेन संयोगात्पद्यम् इति तत्वम्।

## काव्यदोषाः

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः।**
**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः॥ १॥**

अपि च—

**शब्दजातमवष्टभ्य, ये गुणानां विपर्ययम्।**
**स्वभावतः प्रकुर्वन्ति, दोषास्ते समुदीरिताः॥ २॥**

काव्यस्य शब्दार्थौ शरीरम्, रस आत्मा:, गुणाः शौर्यादिस्थानीयाः, अलङ्काराः कटककुण्डलादिस्थानीयाः, रीतयोऽवयवसंस्थानवत्[1], दोषाः काणत्वादिवत् सन्तीति काव्यप्रकाशादौ स्पष्टम्। रमणीयाविघातकत्वं दोषत्वम् अथवा-रसापकर्षको गुणप्रतिहन्ता वृक्षेषु बन्धक इव स्वभावतो यः प्रतिबन्धकतामभ्युपगूहन्नवष्टभ्नाति शब्दजातं स दोषस्त्रिधा। पदनिष्ठो, वाक्यनिष्ठो, वाक्यार्थनिष्ठश्च। असाधुप्रभृतिः पदनिष्ठः शब्दहीनप्रभृतिर्वाक्यनिष्ठः। अपार्थप्रभृतिर्वाक्यार्थनिष्ठश्च। अत्रायमभिसन्धिः—यत्काव्यं हि पुरुषविशेषस्थानीयम्। वाक्यञ्च शरीरम्। रसश्च तदन्तर्यामी-आत्मा तत्र केचन दोषा आगन्तुकाः, केचन पुनर्जन्मसिद्धाश्च भवन्ति। तेष्वपि च केचित् शरीरगताः, केचित्पुनरात्मगताः। तथैव च वाक्यनिष्ठाः, पदनिष्ठाः, वाक्यार्थनिष्ठाः, अनित्याः, नित्याश्च काव्यदोषा बहुविधाः सन्ति तत्रागन्तुकाः प्रायोऽनित्याः, जन्मसिद्धाः पुनः प्रायो नित्याः। एष्वपि केचित् शरीरगता यथा—आगन्तुकाः वातप्रकोपादयः, जन्मसिद्धाः—असुन्दरत्वादयः। आत्मगता आगन्तुकाः दुःखित्वप्रत्ययादयः, मौढ्यादयः पुनर्जन्मसिद्धाः। एवं

१. यत्तु 'रीतिरात्माकाव्यस्येत्युक्तं' तन्न सम्यक्। रीतेर्वर्णरचनारूपत्वात्।

दुःश्रवत्वादयो वाक्यमात्रावष्टम्भा अनित्याः। च्युतसंस्कारत्वादयो नित्या इति संक्षेपः।

'एवं पदानां वाक्यानां वाक्यार्थानाञ्च यः कविः।
दोषान् हेयतया वेत्ति स काव्यं कर्त्तुमर्हति ॥ १ ॥

स्वरूपोदाहरणादिकं तु मया स्वसाहित्यकल्पकलिकायामपि सप्रपञ्चं प्रपञ्चितमेतेषाम्।

## काव्यगुणाः

'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः[1]।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ १ ॥

[2]माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा। केषाञ्चिन्मते तु—

'श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥'

इति दशशब्दगुणा दशैव चार्थगुणाः सन्ति। विशेषप्रपञ्चस्तु मम हिन्दीसाहित्यकलिकायां निभालनीयः।

## काव्यरीतयः

'पदसङ्घटनारीतिरङ्गसंस्थाविशेषवत्।
उपकर्त्री रसादीनाम्' रीतिरात्मा काव्यस्येति वामनः।
'विशिष्टा पदरचना रीतिः' ( का. अ. सू. )

---

१. 'काव्यात्मा ध्वनिः' अत्र पृच्छ्यते—किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपा ध्वनिः काव्यस्यात्मा, उत रसादिरूपमात्रो वा। तत्र न प्रथमः प्रहेलिकादौ अतिव्याप्तिदर्शनात्। द्वितीयश्चेदोमिति ब्रूमः। यत्तु—वक्रोक्तिः काव्यजीवितमुक्तं, तदपि न सम्यक् यतो वक्रोक्तेरलङ्काररूपत्वात्। अलङ्काराणां चोत्कर्षमात्राधायकत्वात्।

२. चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते। ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते। चित्तं व्यानोति यः क्षिप्रं शुष्केन्धनमिवानलः। स प्रसादः समस्तेषु रसेषु रचनासु च॥ रीतयस्तु–माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका। अवृत्तिरल्पवृत्तिर्वा वैदर्भी। ओजःप्रकाशकैर्वर्णैर्बन्धडम्बरः पुनः समासबहुला

सा च रीतिः—वैदर्भी, गौडी, पाञ्चाली, लाटीति भेदेन चतुर्विधा। विस्तारस्तु दर्पणे, मम सा० कलिकायां निभालनीयः।

## काव्यालङ्काराः

'शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥ १ ॥

अपि च—

अलङ्कुर्वन्ति ये शब्दानर्थांश्च सहयोगतः।
त एवान्वर्थनामानोऽलङ्काराः समुदीरिताः ॥ २ ॥

तत्रालङ्कारेषु प्राधान्येनोपमैव, सैव भूमिकाभेदादनेकालङ्कारतां प्राप्नोति। यथाह चित्रमीमांसाकारः–'उपमैका शैलूषी सम्प्राप्ता चित्र-भूमिकाभेदात्। रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः॥' उप-मेयोपमानन्वय-प्रतीप-स्मरण-रूपक-सन्देह-भ्रान्तिमदपह्नुति-उत्प्रेक्षाऽति-शयोक्ति-तुल्ययोगिता-दीपक-प्रतिवस्तूपमा-दृष्टान्त-निदर्शनाव्यतिरेक-सहोक्ति-समासोक्ति-श्लेश-अप्रस्तुतप्रशंसेत्यादयो-ऽलङ्कारा उपमा-भूमिकाभेदादेवोत्पन्नाः। भरतनाटचशास्त्रे-उपमा-दीपक-रूपक-यमकेति चत्वारोऽलङ्काराः। दण्डिना पञ्चत्रिंशत्, भामहेन चत्वारिंशत्, वामनेन त्रयत्रिंशत्, मम्मटेन सप्तषष्टिः, रुद्रटेन द्विपञ्चाशदलङ्कारा मताः। तेषु केचिच्छब्दालङ्काराः, केचिदर्थालङ्काराः, केचिदुभया-लङ्काराः। शब्दालङ्करणक्षमाः शब्दालङ्काराः, यमकानुप्रासादयः। अर्थालङ्करणक्षमा अर्थालङ्कारा विभावनाप्रभृतयः। उभयमप्यलङ्कर्तुं क्षमा उभयालङ्कारा उपमारूपकादयः। एतेषां विस्तारः काव्यप्रका-शादौ वा मम साहित्यकलिकायां विलोकनीयः।

## काव्यस्वरूपविवेचनम्

'तददोषौ[1] शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि'

इति मम्मटाचार्यः।

---

गौडी। वर्णैः शेषैः पुनर्द्वयोः समस्तपञ्चषड्पदो बन्ध पाञ्चालिका मता। लाटी तु रीतिः वैदर्भीपाञ्चाल्योरन्तरा स्थिता।

१. अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्। 'विष्णुमाया नियन्तारं

तच्छब्देनात्र काव्यपदं परामृश्यते—काव्यस्यैव प्रकृतत्वात्। तस्माद्—दोषरहितौ शब्दार्थौ काव्यं सगुणौ गुणाभिव्यञ्जकौ क्वाप्यलङ्काररहितौ चेति समन्वयः। [ आस्वादव्यञ्जकत्वस्य शब्देऽर्थे च समनियतत्वाच्छब्दार्थयुगलमेव काव्यशरीरमिति सिद्धान्तानुयायिनः ] नन्वत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्। काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञात इत्यादि विश्वजनीनव्यवहारतः प्रत्युतशब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च। अयम्भावः—नार्थः कविना रच्यते चन्द्रपर्वतादीनां सृष्टिस्तु परमात्मन इति प्रत्यक्षीकरणात्। अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्; प्रत्येकपर्याप्तं वा? नाद्यः। एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेः। नापि द्वितीयः, एकस्मिन्पद्ये काव्यद्वयव्यवहारापत्तेः। अतो लक्षणेऽर्थपददानं सर्वथा नोचितमिति, असति च काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्ताद् व्यवहारतः शब्दविशेषे सिध्यन्तीं शक्तिं को नाम निवारयितुमीष्टे। तस्माद् **'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'** इति वदतो जगन्नाथस्याक्षेपः।

अदोषावित्यपि न युज्यते, न हि सामान्यलक्षणे क्वचित्केनचिददोषत्वं समावेश्यते, अथ च **'न्यक्कारो ह्ययमेव मे यदरय'** इत्यत्र काव्यत्वमेव न स्यात्। स्वीकृतन्तु खल्वस्योत्तमकाव्यत्वम्?

किञ्चाष्टमोल्लासे **'ये रसस्याङ्गिनो धर्माः'** इत्युक्त्वा गुणो रस-

---

विन्दते भक्तिपूरिता' इत्यादौ काव्यत्वविघटकाच्युतसंस्कृतादिदोषवारणाय अदोषाविति पदम् 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः' इत्यादौ निरलङ्कारेऽतिव्याप्तिवारणाय अनलङ्कृतिर्विशेषणम्। 'शुष्को वृक्षस्तिष्ठत्यग्रे' इत्यादौ निरलङ्कारेऽतिव्याप्ति वारणाय अनलंकृतीति विशेषणम्। वस्तुतस्तु—अनलङ्कृतीति पदं न लक्षण घटकम् किन्तु सालङ्कारौ शब्दार्थौ—इत्यस्य ग्राहकम्। ईषदर्थे च नञ्। शब्दार्थावित्यत्रार्थाश्रयत्वाच्छब्दस्य प्रागुक्तिः। अत एव कविकुलगुरुः कालिदासोऽपि 'वागर्थाविव सम्पृक्तौ' इत्यत्र शब्द स्वीयैप्राक्प्रयोगं कृतवान्।

धर्मो, न शब्दार्थयोरित्युक्तम्। ततः कथं युज्यते सगुणाविति शब्दार्थयोर्विशेषणम् ?

किञ्चालङ्काराभावेऽपि काव्यत्वं सालङ्कारस्य त्वर्थतः सिद्धम्। इत्यनलङ्कृतित्वमपि निरर्थकत्वमेव। [ पण्डितराजस्तु **'लक्षणे गुणालङ्कारादिनिवेशो न युक्तः।'** **'उदितं मण्डलं विधोः'** इति काव्ये दूत्यभिसारिका-विरहिण्यादिसमुदीरितेऽभिसरण-विधि-निषेधजीवनाभावादिपरे **'गतोऽस्तमर्कः'** इत्यादौ चाव्याप्त्यापत्तेः। अतो लक्षणे गुणालङ्कारणोर्निवेशो नोचितः ] इति, नास्मिन् लक्षणे कश्चिदंशोऽप्यदुष्ट इति विश्वनाथजगन्नाथादीनामाक्षेपः। परमेतत्सर्वमविचारमूलम्। न च सहृदयहृदयङ्गमम्। कथमिति चेत्क्रमेणोत्तरम्—

तथाहि—आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात् [ चमत्कारिबोधजनकज्ञानविषयतावच्छेदकधर्मवत्त्वरूपस्यानुपहसनीयकाव्यलक्षणस्य प्रकाशाद्युक्तलक्ष्यतावच्छेदकस्योभयवृत्तित्वात् काव्यं पठितं श्रुतं बुद्धमित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति ] अर्थात्—अस्वादोद्बोधकत्वमेव काव्यत्वप्रयोजकरूपं, तच्च शब्देऽर्थे चाविशिष्टम् इति भावना विषयेष्वर्थेषु सर्वथैव युक्तियुक्ता, यथा— **'उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्** अथ चैकविशिष्टस्येतरस्य काव्यत्वम्। किञ्च **'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'** इति वदतो मतौ तु 'काव्यं श्रुतं, अर्थो न ज्ञात' इत्युक्तेर्व्याघातः। यतो हि दोषगुणालङ्काराणामुभयत्र साम्येऽपि—एकस्य काव्यत्वमपरस्य नेति सर्वथाऽनुचितम, इत्यर्थग्रहणं सुष्ठु सार्थकम्।

अनुपहसनीयकाव्यलक्षणेऽदोषावित्यप्यावश्यकम्। यतो हि—अत्र तु भगवता मम्मटेन तादृशमेव लक्षणं कृतम्, येन नात्र दोषलेशोऽप्यायाति। तथाहि 'उद्देश्यप्रतीतिविघातकत्वं दोषत्वम्'। 'मुख्यार्थप्रतीतिविघातको वा दोषः' इति दोषलक्षणेन नात्र कोऽपि दोषः[1]। अवि-

---

१. सति सम्भवे—ईषद्दोषाविति चेत्तदपि न युक्तम्। यतो हि—'कीटानुविद्धरत्नादि०' यथा कीटानुविद्धस्य रत्नस्य रत्नत्वं न व्याहन्यते तथैव यत्र रसप्रतीतिरस्ति तत्र दुष्टेष्वपि काव्येषु काव्यत्वं न व्याहन्यत एवेति।

लम्बितानपकृष्टरसविषयप्रतीतेर्विद्यमानत्वात्। यत्तु—दर्पणकारादयः काव्यलक्षणेऽत्र काव्यपदं निर्विषयं प्रविरलविषयं वेत्यादिकमुक्त्वा दोषाणां दुर्वारत्वात् **'वाक्यं रसात्मकं काव्य'**मित्याहुः तन्न युक्तम्। वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः। न चेष्टापत्तिः—महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात्। न च तत्रापि यथाकथञ्चित-परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम्। ईदृशरसस्पर्शस्य **'गौश्चलति' 'मृगो धावति'** इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात्। तस्मान्न दर्पणकारकाव्यलक्षणमपि निर्दुष्टं प्रत्युत प्रकाशकारोक्तन्त्वनुपहसनीय-काव्यलक्षणं सर्वापेक्षया सारपूर्णमिति निर्बाधम्।

सगुणावित्यत्र तु पूर्वाचार्यरीतेरनुसरणमाश्रित्योक्तम्, पश्चात्तु केवलं स्वाशय एव प्रकटितः। अथवा शब्दार्थद्वारा गुणाभिव्यक्तिरेव जायते। तस्मादत्र गुणस्य रसनिष्ठत्वेऽपि तद् व्यञ्जकपरमेव गुणपद-मिति सिद्धयतीति दिक्।

'अनलङ्कृती पुनः क्वापि' इत्यस्यायमाशयः—यत्र रसः स्फुटस्तत्र स्फुटालङ्काराभावेऽपि न काव्यत्वहानिः, रसाभावे त्ववश्यम्भाव्यम-लङ्कारेण। तथाहि स्फुटरसालङ्कारान्यतरविशिष्टौ शब्दार्थौ काव्य-मिति फलितोऽर्थः।

अतः 'यः कौमारहरः' इत्यत्र न कश्चन स्फुटोऽलङ्कारः। कारणा-भावे कार्योत्पादरूपस्य विभावनालङ्कारस्य न स्फुटता, यत उत्कण्ठा-भावकारणानां भावमुखेनैव वर्णनं न त्वभावमुखेन, एवं कारणसत्वे कार्यानुत्पादरूपायाः विशेषोक्तेश्च न स्फुटता, यतः कारणस्य कथनेऽपि कार्यस्य उत्कण्ठारूपस्य न भावमुखेन कथनम्, अत उभयोरस्फुटत्व-मेवेति।

## काव्यभेदनिरूपणम्

काव्यं तावत्त्रिविधम्[1] १ उत्तमं २ मध्यमम् ३ अधमं चेति; तत्रो-

---

१. उत्तमं ध्वनिपरपर्यायं संक्षेपतस्त्रिविधम्, १ रसादिव्यङ्ग्यं २ वस्तु-व्यङ्ग्यम् ३ अलङ्कारव्यङ्ग्यञ्चेति। विस्तारेण तु तस्य शुद्धा एकपञ्चाशद्भेदा

त्तमकाव्यम्–'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।' अत्रेदमिति पदं प्रकृतकाव्यपरामर्शकम्। तस्माद्—अभिधावृत्तिप्रतिपा-

भवन्ति। तेषां विशेषप्रपञ्चस्तु काव्यप्रकाशादिषु विलोकनीयः। शब्दश्च द्विधा ध्वनिवर्णभेदात्। तत्र ध्वन्यात्मकशब्दव्यापारस्थलं वादित्रमात्रादिकम्। तौर्यत्रिके तस्योपयुक्तत्वात्। तौर्यत्रिकस्य च कलान्तःपातितया काव्याङ्गत्वम्। नादविद्या-विदां मते तन्त्रीकण्ठोत्थिताः षड्जादयः सप्तस्वरास्तदनुगामिनो भैरवीप्रभृतयो रागाश्च ध्वन्यात्मशब्दस्यैव पारे परार्द्धगणनाविषयाः। वर्णात्मकः शब्दः संस्कृतप्राकृतरूपः। स च व्युत्पन्नाव्युत्पन्नभेदेन द्विविधः। एतदेव 'चत्वारि शृङ्गा' इति मन्त्रे द्वे शीर्षे-इति पदाभ्यामुपपादितम्। भाष्यकारैश्च द्वे शीर्षे-इत्युपक्रम्य 'द्वौ शब्दात्मानौ नित्यः कार्यश्चेति' मान्त्रिकं मतमेवानुमतम्। तत्राऽव्युत्पन्नो नित्यः, व्युत्पन्नश्च कार्यत्वादनित्य इति प्राचां मतम्। वैयाकरणानां मते 'नित्याः, शब्दाः, सिद्धश्च शब्दार्थसम्बन्ध इति' निर्विवाद एव मार्गः। नैयायिकानां मते तु सर्वथाऽनिवार्यशब्दानां कार्यत्वम्। अतएव 'वीचितरङ्गन्यायेन तदुत्पत्तिः प्रकीर्तिता। कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते।' वीचीतरङ्गन्यायेन कण्ठतालुमृदङ्गाद्यभिघातोत्पन्नैकशब्देनाऽपरशब्दोत्पत्तिः, कदम्बगोलकेन वा दशदिक्त्वावच्छेदेनोत्पन्नो दशशब्दैरन्यदशशब्दोत्पत्तिः बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वात्। उत्पन्नः ककारो विनष्टः ककारश्चेति प्रतीतिः। मीमांसकनये तु प्रत्यभिज्ञया स एवायं ककार इति वर्णनित्यत्वावगमः। सांख्यनयेऽपि पदार्थमात्रस्याविर्भावतिरोभावस्वीकारेण नित्यत्वम्। अनादिनिधनं ब्रह्म शब्दतत्त्वं परक्षरं इत्यादिरीत्या मध्यमा नादव्यङ्गस्फोटात्मकशब्दस्य ब्रह्मरूपत्वेन नित्यत्वम्। व्यज्यतेऽसौ न जन्यते इति सुष्ठूक्तम्। उभयविधोऽयं शब्दः काव्याङ्गम्। अपभ्रंशानामपि तदङ्गत्वात्, अतएव 'संस्कृतेनैव कोऽप्यर्थः प्राकृतेनैव चापरः' इत्याद्याहुः कण्ठाभरणकाराः।

*अत्राधमपदस्य साहाय्येनैव ध्वनेः प्राधान्यम्। अर्थात्—उत्तरीयकर्षणेन चन्दनच्युतिरित्यन्यथासिद्धिपरिहाराय 'निःशेषग्रहणम्'। ततश्चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन सम्भोगचिह्नोद्घाटनाय तटग्रहणम्, स्नाने हि सर्वत्र चन्दनच्युतिः स्यात्, तव तु स्तनयोस्तट उपरिभाग एव दृश्यते, अत इयमाश्लेषकृतैव। तथा 'निर्मृष्टरागोऽधर' इत्यत्र ताम्बूलग्रहणविलम्बात्प्राचीनरागस्य

द्योऽर्थो वाच्यार्थः, व्यञ्जनावृत्तिबोध्यश्च व्यङ्ग्यार्थः, एवं यत्र व्यङ्ग्यार्थो वाच्यादधिकचमत्कारी स्यात्तदुत्तमं काव्यं, तदेव ध्वनिरिति कथ्यते इति निर्गलितोऽर्थः। ध्वनति स्फोटे व्यनक्तीति ध्वनिः। ध्वनिव्यवहारश्च वैयाकरणमतानुसारेण पटादिवर्णसमुदायरूपैः क्षणिकैः पदैः पूर्व-पूर्ववर्णानुभवजनितसंस्कारसहितान्तिमवर्णानुभवद्वारा स्फोटरूपो नित्यः शब्दोऽभिव्यज्यते अभिव्यक्तेन तेनार्थो विज्ञायते। अतस्तादृशस्य प्रधानीभूतस्फोटव्यञ्जकस्य शब्दस्य ध्वनिरिति संज्ञा तैरुदाहृता। प्रधानीभूतव्यङ्ग्यव्यञ्जकसादृश्यादालङ्कारिकैरपि शब्दार्थयुगलस्य ध्वनिरिति व्यवहारः कृतः। यथा—

**निःशेषश्च्युतचन्दनं स्तनतटं निर्मष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।**
**मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्॥**

अत्र तदन्तिकमेव रन्तुं गतासीति व्यङ्ग्य एव, वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमिति वाच्यादधिकचमत्कारकारी। यतो हि पद्यप्रतिपाद्यस्य विप्रलम्भस्य परिपोषः, व्यङ्ग्येन सम्भोगरूपेण क्रियते। परनायिकासम्भोगदर्शनाद् विप्रलम्भस्योद्दीपितत्वात्। अतो

---

किञ्चिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय निर्मृष्टराग इति रागस्य निःशेषमृष्टतोक्ता। पुनः स्नानसाधारण्यव्यावर्तनेन सम्भोगचिह्नोद्घाटनायाऽधर इति विशिष्यग्रहणम्। उत्तरोष्ठे सरागेऽधरोष्ठमात्रस्य, निर्मृष्टरागता चुम्बनकृतैवेत्यादिहेतुभिर्ध्वनेरिदमुदाहरणम्—इत्येते वाक्यार्था स्नानव्यावृत्तिद्वारा सम्भोगाङ्गानामश्लेषचुम्बनादीनां प्रतिपादनेन प्रधानव्यङ्ग्यव्यञ्जने सहायकमाचरन्तीति रसगङ्गाधरकाराः। परमत्राधमपदन्तु विशेषसारपूर्णमिति।

केचन काव्यस्य चित्राख्यं तृतीयं भेदन्नेच्छन्ति, तन्न सम्यक्। अतएवोक्तं—ध्वनिकृता-प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते। उभे काव्ये ततोऽन्यद् यत्तच्चित्रमधीयये।

रसानुगुणतया व्यङ्ग्य एवाधिकचमत्कारकारी,[1] तत्प्राधान्येन चात्र वाच्यार्थो गुणीभूतस्तस्मादिदमुत्तमं काव्यम् ।

## मध्यमकाव्यम्

**'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।'**

अतादृशि वाच्यादनतिशायिनि व्यङ्ग्ये मध्यमं काव्यं भवति। अत्र व्यङ्ग्यस्य वाच्यापेक्षया गुणीभूतत्वादिदं गुणीभूतव्यङ्ग्यं मध्यमं काव्यमवगन्तव्यमिति भावः ।

यथा—

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ।।**

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया च मुखच्छायामालिन्यातिशयरूपस्य वाच्यस्यैवाधिकचमत्कारास्वाद इति तदनतिशायित्वादिदं मध्यमकाव्यस्योदाहरणम् ।

## अधमकाव्यम्

**'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्'** । अत्राऽव्यङ्ग्यमवरं, अधमं काव्यम् । तच्चित्रमित्यभिधीयते । इहाव्यङ्ग्यपदमस्फुटतरव्यङ्ग्यपरं तात्पर्य्यविषयीभूतव्यङ्ग्यराहित्यपरं वा न तु व्यङ्ग्यरहितपरं पार्यन्तिकरसादिव्यङ्ग्यस्यैव सर्वत्र सत्वात् अतोऽस्फुटतरव्यङ्ग्यपरं चित्रकाव्यम् । तच्च द्विविधं शब्दचित्रं, वाच्यचित्रञ्च । यत्र शब्दगतं वैचित्र्यं तच्छब्दचित्रं, तच्चानुप्रासादिशब्दालङ्काररूपम् यत्र चार्थगतं वैचित्र्यं तद्वाच्यचित्रमुपमाविभावनाद्यर्थालङ्काररूपम् । शब्दचित्रं यथा—**'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा०'** इत्यादिकम् । वाच्यचित्रं यथा—**'विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम्०'** इत्यर्थचित्रम् ।

---

१. अभिधावृत्त्या—अर्थबोधको वाचकः—यथा—'गौः, शुक्लः, चल, डित्थः' । लक्षणावृत्त्या अर्थबोधको लाक्षणिकः, गङ्गायां घोष इत्यत्र गङ्गातीरे लाक्षणिकः । व्यञ्जनावृत्त्या प्रतिपाद्योऽर्थबोधको व्यञ्जकः यथा—निःशेषेत्यादि ।

## वाक्यनिरूपणम्

**'वाक्यं स्याद् योग्यताऽऽकांक्षासत्तियुक्तः पदोच्चयः'।**

शक्तं पदम्, पदसमूहो वाक्यम्। योग्यतया आकाङ्क्षया आसत्या च युक्तः पदसमूहः वाक्यं वाक्यसंज्ञं स्यात्। तद्बोधस्त्वेवं—प्रथमस्तावच्छब्दश्रवणात्परं श्रोतुरात्मनि तत्तच्छब्दप्रतिपाद्या अर्थाः प्रतिभासन्ते, ततश्चाकांक्षायोग्यतादिमहिम्ना ते परस्परं विशिष्टान्वयबोधे समुद्यन्ति। आत्मनि शब्दश्रवणजन्या उपस्थितिश्चैषां स्मृतिरूपैव। सा च पूर्वमनुभूतानां पदजन्योपस्थितिविषयपदार्थानां संस्कारेण योग्योद्बोधकसहभावात्सम्पद्यते। तादृशसंस्कारस्य चोद्बोधे कस्यचिदन्यस्योद्बोधकस्यादर्शनात् तत्तच्छब्दश्रवणस्यैव हेतुत्वम्। यतो हि शब्दानां यदि पदार्थैः सह सम्बन्धो न स्यात्, तर्हि-अर्थस्मृतिरपि न स्यात्स्मर्य्यन्ते च तैस्तैस्तेऽर्थाः। तस्मादाकांक्षायोग्यतासन्निधिश्च वाक्यार्थज्ञाने हेतुरिति निर्विवादम्। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा, अर्थाबाधो योग्यता, पदानामविलम्बेनोच्चारणं सन्निधिः, सैव बुद्ध्यविच्छेदरूपासत्तिरप्युच्यते। आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा-**'गौरश्वः पुरुषो हस्ती'** इति। **'अग्निना सिञ्चति'** इत्यपि न प्रमाणं योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदान्यपि न प्रमाणम्, सान्निध्याभावात्। तस्माद् योग्यतया आकाङ्क्षया आसत्त्या च युक्तं वाक्यं स्यादिति ध्येयम्।

## शब्दार्थनिरूपणम्

**'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।**
**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः'॥**

अत्र काव्ये शब्दस्त्रिधा, उपाधीनां त्रैविध्याद्। तेषां वाचकलाक्षणिकव्यञ्जकशब्दानामर्था अपि क्रमात् वाच्यलक्ष्यव्यङ्ग्यभेदात् त्रिधैव।

## तात्पर्यार्थोऽपि केषुचित्

अभिहितान्वयवादिनां[1] भाट्टमीमांसकानां मते वाक्यार्थ इतरान्वित-घटादौ संसर्गे शक्तिरिति तद्बोधनाय तात्पर्यनाम्नी वृत्तिः स्वीक्रियते, तदर्थश्च तात्पर्यार्थः। यथा—घटं करोतीत्यादौ घटवृत्तिकर्मत्वानुकूला कृतिरित्यर्थो बोध्यते, तत्र घटपदस्य च घटोऽर्थः, अम्प्रत्ययस्य च कर्मता, वृत्तिता तु न कस्याप्यर्थ इत्यपदार्थोऽपि वृत्तिता तात्पर्यवशाद-नयोः संसर्गमर्यादया भासते। बहुवचनेनायमेव पक्षो मम्मटसम्मत इति। मतान्तरे तु वाच्य एव वाक्यार्थः। अर्थात्–गवादिशब्दानामान-यनादिकार्यान्विते गवादौ शक्तिः।

[2]यथा—देवदत्त गामानयेत्युत्तमवृद्धप्रयोगात्सास्नादिमतीं व्यक्तिं मध्यमवृद्धे सञ्चारयति तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामनु-माय पुनस्ततो गां नयाश्वमानय—इति प्रयोगे गवापसरणमश्वाहरणं च दृष्ट्वाऽन्वयव्यतिरेकाभ्यां क्रियापदार्थान्विते कारके कारकपदस्य, कारकपदार्थान्वितक्रियायां च क्रियापदस्य शक्तिं बालोऽवधारयति। ततः प्रयोगकाले बालस्य मनसि प्रथमत एवान्वितबुद्धिर्जायते। न च गौरवेणान्वयांशपरित्यागः, प्रथमगृहीतान्वयशक्तेरुपजीव्यत्वेन तदपरि-त्यागात्। तस्मात् किं तात्पर्यवृत्त्यन्तरेणेत्यन्विताभिधानवादिनः प्रभा-

१. अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानामर्थानामन्वय इति ये वदन्ति तेऽभिहितान्वयवादिनः। वृत्तिं विनाऽर्थबोधनेऽतिप्रसङ्ग इति 'वाक्यार्थरूपे संसर्गे शब्दस्य तात्पर्याख्या वृत्तिरभ्युपगन्तव्येति।

२. पदानि अन्वितानि भूत्वा पश्चाद्विशिष्टमर्थं कथयन्तीति यो वदति सोऽन्विताभिधानवादी। अत्रारुचिबीजं तु अन्वितत्वेन शक्तावपि–अन्वयविशेष-भानायाऽऽकांक्षादिकमवश्यं कारणं वाच्यमिति। इदं–गुरुसम्मतं, पक्षान्तरन्तु—पदसमूहगम्योवाक्यार्थः। स वाच्यान्तर्गतपदार्थ एवेति।

गङ्गायां घोष इत्यत्र गङ्गाशब्दः शीतलत्वातिशयादौ व्यञ्जकः। अभि-धावृत्त्या बोध्योऽर्थो वाच्यः। लक्षणावृत्त्या बोध्योऽर्थो लक्ष्यः। व्यञ्जनावृत्त्या बोध्योऽर्थो व्यङ्ग्यः।

करस्य मतम् । अत्रेदमपि विज्ञेयं—नैयायिका व्यङ्‍्यार्थबोधमनुमानेन कुर्वन्ति । भट्टमतानुयायिनो मीमांसका दीर्घदीर्घतरव्यापाररूपयाभिधयैव व्यङ्ग्यार्थं जानन्ति । अभिहितान्वयवादिनो मीमांसकाः संसर्गबोधिकया तात्पर्याख्यवृत्त्यैव व्यङ्‍्यबोधमुररीकुर्वते । भट्टनायकादयः सांख्यकाः-अभिधयैव व्यञ्जनाकार्यं चालयन्ति । एतानि मतानि निराकृत्य वैयाकरणैरालङ्कारिकैश्च व्यङ्‍्यार्थबोधाय व्यञ्जनावृत्तिरादृतेति संक्षेपः ।

सङ्केतग्रहप्रकारस्तु—

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।**
**वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।।**

## [1]शक्तिनिरूपणम्

**वाच्यार्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्त्रः शब्दस्य शक्तयः ।।**

अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः शक्तिः । साक्षात्सङ्केतितमर्थं बोधयितुं प्रवृत्ता शब्दशक्तिरभिधा । [2]अभिधीयते कथ्यते साङ्केतिकः शब्दार्थोऽनयेति निर्वचनात् । सेयमभिधा त्रिविधा । केवलसमुदायशक्तिः, केवलावयवशक्तिः, समुदायावयवशक्तिसङ्करश्चेति । आद्याया डित्थादिरुदाहरणम् । द्वितीयस्याः पाचकपाठकादिः । तृतीयायाः पङ्कजादिः । एता एव विधा रूढि, योग, योगरूढिशब्दैर्व्यपदिश्यन्ते । तत्राखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः । अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थमप्रतिपादकत्वं योगः । उभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः । अभिधया वा शब्दो यमर्थं बोधयति स तस्य वाचकः । स च जातिगुणक्रियायदृच्छात्मकः । तत्र जातिर्गोत्वादिः, संस्थानविशेषाभिव्यङ्ग्या प्रत्यक्षसिद्धा, गवादिपदानामभिधेया । गुण शुक्लादिः, शुक्लादिपदानामभिधेयः । चलनक्रियादिश्चलनादिशब्दानाम् । यादृच्छिकस्तु वक्त्रा स्वेच्छया डित्थादिशब्दानां प्रवृत्तिनिमि-

१. कवित्वबीजरूपसंस्कारविशेषः शक्तिः ।
२. तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा ।

त्त्वे सन्निवेशितो धर्मः। स च परम्परया व्यक्तिगतश्चरमवर्णाभिव्यङ्ग्योऽखण्डः स्फोटः। तदित्थं चतुष्टयी शब्दानां प्रवृत्तिरिति सङ्गच्छते।

## सङ्केतग्रहनिरूपणम्

**'व्यक्तेरुपाधिषु सङ्केतो गृह्यते न व्यक्तौ आनन्त्यव्यभिचारदोषापातात्'**। अत्रेदं विचार्यते—जात्यादिषु सङ्केतग्रहे बहुदोषसम्भावनया व्यक्तौ शक्तेरङ्गीकारे तत्तद्दोषाणां वारणसम्भवेऽपि शक्त्यानन्त्यव्यभिचारयोरवश्यम्भावात् तत्र सङ्केतः कथमपि न भवितुमर्हति। तत्कथमिति चेच्छृणु—प्रथमन्तावद् व्यक्तिशक्तिवादिनं प्रति इयं पृच्छा—उच्चारिताच्छब्दात् सङ्केतग्रहः किं व्यक्तिनिचयेषु कस्याञ्चिदेकस्यां व्यक्तौ वा ? तत्र नाद्यः, कदाचित्केनचिदुच्चारितात्—एकस्माच्छब्दात् सकलव्यक्तीनां युगपदुपस्थितेरत्यन्तासम्भवात्। नापि द्वितीयः। उच्चारिताद् गोशब्दात्कस्याश्चिदेव गोव्यक्तेरुपस्थितावपि तदितरासां गोव्यक्तीनां ततः कथमपि भानासम्भवात्, दृश्यते च तद्भानम्। अपरञ्च व्यक्तौ सङ्केतस्वीकारे **'मृगः श्वेतश्चलः डित्थः'** इत्यभिधाने सर्वैरेव पदैरेकस्यैव मृगव्यक्तेरभिधानात् **'घटः कुम्भः'** इत्यादीनामिव तुल्यव्यक्तिवाचकतया सहप्रयोगः कथमपि न सम्भवेत्। उपाधौ सङ्केतस्वीकारे तु जातिगुणक्रियासंज्ञाशब्देषु प्रवृत्तिनिमित्तस्य भिन्नत्वात् तादृशप्रयोगे पर्यायत्ववारणसम्भवात् सहप्रयोगस्य न काप्यनुपपत्तिरिति दिक् ( एवं गुणद्रव्यक्रियास्वपि दोषापातः ) पृथक् सङ्केतग्रहे।

## जातिवादनिरूपणम्

ब्राह्मणादिनिष्ठा लक्षणविशेषोद्भाविता प्रत्यक्षा ब्राह्मणत्वादिजाति; ब्राह्मणादिपदानां वाच्या। **'नित्यत्वे सति अनेकसमवेतत्वं जातित्वम्।'** इति तल्लक्षणम्। सा चानुमितिगम्या घ्राणत्वादिर्घ्राणादीनाम्। यदि जातावेव शक्तिस्तदा कथं व्यक्तिभानमिति तु न सम्यक्, व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते अर्थात् एतन्मते गवादौ गोत्वादिरिव शुक्लादौ शुक्लत्वादिः, डित्थादौ डित्थत्वादिर्जातिरस्ति,

डित्थादीनां प्रकृत्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात्, शुक्लत्वादिजात्याश्रयस्य शुक्लादिगुणस्यैवाक्षेपाच्च इति। नहि कश्चित्पदार्थो जातिसम्बन्धमन्तरेण स्वरूपं प्रतिलभते। यदुक्तं वाक्यपदीये—'**नहि गौः स्वरूपेण गौ र्नाप्यगौः, गोत्वाभिसम्बन्धात्तु गौः**' इति। कश्चित्पुनरुपाधिलब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुः, यथा—शुक्लादिर्गुणः। नहि शुक्लादेर्गुणस्य पटादिवस्तुस्वरूपप्रतिलम्भनिबन्धनत्वम्। जातिमहिम्नैव तस्य वस्तुनः प्रतिलम्भस्वरूपत्वात्, अतोऽसौ लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुः। येऽपि च नित्याः परमाणुत्वादयो गुणास्तेषामपि गुणजातीयत्वादेवंप्रकारत्वम्। तदेवं प्राणप्रदोपाधिनिबन्धनत्वं यस्य शब्दस्य स जातिशब्द इति। एवं सर्वेषामेव गुणक्रियायदृच्छाशब्दानां जातिनिबन्धनत्वम्। यत्त्वेकबुद्ध्याश्रयतया चैकत्वव्यवहारस्तस्याः सिद्धः, शुक्लादिसञ्चारणादीनां प्रतिव्यक्तिभिन्नत्वाद् एवं च व्यक्तिशक्तिवादे दर्शितयोरानन्त्यभिचाररूपयोरत्रापि सम्भव इत्यपि न सम्यक्। अपरं च 'चलन्तीं गामानय' इति वाक्ये चलनक्रियोपादानेऽपि तत्र सङ्केताभावात् 'पुरुषः स्थितां गामानयेत्' इत्यतिप्रसङ्गोऽपि स्यात्। लाघवात्प्रत्यभिज्ञया च तेषामेकत्वाभ्युपगमात्। तथा चोक्तं—'**गुणक्रियायदृच्छानां वस्तुत एकरूपाणामाश्रयभेदाद् भेद इव लक्ष्यते**'। अतो भेदज्ञानं भ्रम एवेति तात्पर्यम्। एवं गुणक्रिया यदृच्छाशब्दानामपि सर्वेषां पयःशङ्खगुडतिलशुकसारिकामनुष्याद्युदीरितेषु भिन्नेषु डित्थादिशब्देषु समवेतं डित्थत्वादिकं सामान्यमेव संज्ञिषु यथायोगमध्यस्तम्। अतः सर्वेषां जातिरेवार्थ इति दिक्।

## [1]जातिविशिष्टवादप्रदर्शनम्

नहि व्यक्तिमात्रे सङ्केतग्रहणं कर्तुं शक्यते न वा जातिमात्रे। आद्ये—आनन्त्याद् व्यभिचाराच्च। अन्त्ये व्यक्तप्रतीतिरिति वाच्यम्।

---

१. जातावेव शक्तिरिति मीमांसकाः, जातिविशिष्टे सङ्केत इति नैयायिकाः, अतद्व्यावृत्तिरूपोऽपोह इति बौद्धाः। उपाधावेव शक्तिरिति महाभाष्यकाराः इदमेव मतञ्चालङ्कारिकसम्मतम्।

यथा सति वृत्त्यानुपस्थितत्वेन शाब्दबोधविषयत्वानुपपत्तिः स्यात्। तस्माज्जातिविशिष्ट एव सङ्केतः (अत्रापि पूर्ववद्दोषापातः)।

## महाभाष्यकारमतनिरूपणम्

ननु गुणक्रियाशब्दसंज्ञिव्यक्तीनामेव तत्तदुपाधिनिबन्धनभेदजुषामेकाकारतावगतिनिबन्धनत्वं न तु जातेरिति चत्वार्य्येव शब्दप्रवृत्तिनिमित्तानि। तस्मादुपाधावेव शक्तिरिति भगवान् महाभाष्यकारः। यथा ह्येकमेव मुखं तैलखड्गोदकादर्शादीनां प्रतिबिम्बावगतिनिबन्धनानां भेदान्नानाकारत्वेन प्रत्यवभासते तथैव शुक्लादिव्यक्तिर्देशकालावच्छिन्ना तत्तत्कारणसामग्र्युपजनितशङ्खाद्याश्रयविशेषवशेन नानारूपतयाऽभिव्यक्तिमासादयन्ती विचित्रैव स्यादिति। अतश्च तस्याः शुक्लादिव्यक्तेरेकत्वाज्जातेश्च भिन्नाश्रयसमवेतत्वाच्छुक्लत्वादिजात्यभावान्न शुल्कादिशब्दानां जातिशब्दत्वम्। किन्तु पचतीत्यादौ डित्थशब्दादौ डित्थादौ च संज्ञिनि वाच्यम्। अत्राप्येकस्या एव पाकादिक्रियाव्यक्तेर्डित्थादिशब्दव्यक्तेर्डित्थादेश्च संज्ञिनो यथाक्रममभिव्यञ्जकानां पाकादीनां तथा ध्वनीनां वयोऽवस्थाविशेषाणां कौमारादीनाञ्च यो भेदस्तद्वशेन नानाविधेन रूपेणावभासमानत्वात् शब्दप्रवृत्तिनिमित्तस्य भिन्नत्वाच्च जातिगुणक्रियासंज्ञाशब्देष्वेवेत्थं सङ्केतग्रहणं सुलभम् अतो न व्यक्तौ न वा जातौ नापि च जातिविशिष्टादौ सङ्केतग्रहः प्रत्युत उपाधावेव सङ्केत इति निर्बाधं सिद्धम्। तदुक्तं **'संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च'** इति।

## लक्षणानिरूपणम्

**[1]मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया॥**

अर्थात् मुख्यार्थबाधे तद्युक्तान्यार्थप्रतीतिमूला शक्यसम्बन्धवती

---

१. मुख्यार्थबाधमुख्यार्थसम्बन्बधोभयपूर्वकः रूढिप्रयोजनान्यतरहेतुकः, अशक्यार्थप्रतिपादकः शब्दव्यापारो लक्षणा। लक्षणाशब्दो द्विधा विगृह्यते—भावव्युत्पत्त्या करणव्युत्पत्त्या च। तत्र मम्मटाचार्यप्रभृतिभिः प्राचीनपण्डितैर्भावव्युत्युत्तिरेवादृतेति ध्येयम्।

लक्षणा। लक्षणं लक्षणेति वा लक्ष्यते प्रतीतिविषयीक्रियते स्वाभिमतार्थसम्पत्तिर्ययेति निर्वचनात्। सेयं द्विविधा—निरूढा, प्रयोजनवती च। तत्र प्रयोजनवती द्विधा—शुद्धा गौणी च। शुद्धापि द्विधा—सारोपा साध्यवसाना च। विषयविषयिणोः पृथक् निर्दिष्टयोरभेद आरोपः। अपृथक् निर्दिष्टे विषये विषय्यभेदोऽध्यवसानम्। तत्राद्येन सहिता सारोपा, द्वितीयेन तु साध्यवसाना गौणी चतुर्विधा जहत्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना च। तदित्थं षड्विधा लक्षणा। गूढाऽगूढव्यङ्ग्यभेदयोजनया पुनर्द्वैविध्यं भजते। अगूढव्यङ्ग्या गूढव्यङ्ग्या चेति। तदनया दृष्ट्या प्रयोजनवत्याः सङ्कलय्य द्वादशभेदा भवन्ति। तत्र शुद्धायाः पूर्वोक्तभेदद्वययोजनेन लक्षणायाः कात्स्न्र्येन चतुर्दशभेदा भवन्ति। कर्मणि कुशलः, गङ्गायां घोष इत्याद्युदाहरणानि। तेषु कानिचिदेवात्र विविच्यन्ते। तद्यथा, **निरूढा—'कर्मणि-कुशलः'** अत्र कुशलपदं रूढ्या दक्षे [ चतुरार्थे ] लाक्षणिकम्। कुशान् लातीति कुशल इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो वाच्योऽर्थः स च दर्भग्रहणाद्ययोगात् प्रकृतेऽसम्भवन् बाधितस्वरूपः **'सतो ग्रहणमसतः परित्यजनञ्चेति'** विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं लक्षयति। परं कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि प्रसिद्धिबलात् पूर्वमत्र कुशलपदेन दक्षरूपार्थ एव बोध्यते। एवं **'कलिङ्गः साहसिकः'** इत्यादीन्युदाहरणानि निरुढलक्षणायाः। इति दर्पणकारादयः। ( तेषामयमभिप्रायः, यच्छब्दानां व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमिति तु न नियमः, पाचकादिशब्दे द्वयोरैक्यसत्त्वेऽपि गवादिशब्दे व्यभिचारात् प्रकृते तु कुशग्राहित्वरूपव्युत्पत्तिनिमित्तस्यानेकपदार्थघटितत्वेन गुरुत्वात् तदपेक्ष्य लघुना दक्षत्वरूपाखण्डोपाधिनैव कुशलशब्दस्य सङ्केतग्रह इति ) ननु रुढिवद् व्युत्पत्तिरपि पदार्थोपस्थापिकेति चेन्न, न रुढ्या प्रतिरुद्धाया व्युत्पत्तेः पदार्थोपस्थापकत्वाऽसम्भवात्। तदुक्तं भट्टपादैः—

**'लब्धात्मिका सती रुढिर्भवेद् योगापहारिणी।**
**कल्पनीया तु लभते नात्मानं योगबाधतः॥'** इति।

अन्यथा '**व्युत्पत्तिलभ्यस्य मुख्यार्थत्वस्वीकारे 'गौः शेते'** इत्यत्रापि शयनकाले गमनकर्त्तृत्वरूपमुख्यार्थबाधे न लक्षणा स्यात्। तस्मान्नैषा रुढिलक्षणा प्रत्युत रुढिशक्तिरेवेति ये वदन्ति तन्न सम्यक्। अत एवोद्योतकारादयोऽपीत्थमत्र समादधति ये तु कर्मणि कुशलः, लावण्यं, मण्डपः, कुण्डलम्, इत्यादौ दक्षत्वादेः प्रवृत्तिनिमित्तत्वाद् व्युत्पत्तिनिमित्तस्य झटिति अप्रतीतेः बाधप्रतिसन्धानं विनापि तत्प्रतीतेश्च '**कुशेः कलच्**' प्रत्यये कुशलपदस्य वैयाकरणैः साधनाच्च रुढिशक्तिरेवात्र' इति वदन्ति तन्मते तैलपदमुदाहरणमिति बोध्यम्। तैलपदस्य तिलविकारद्रवे शक्तस्य सार्षपे निरूढलक्षणेति। तद्वदिहापि रूढिलक्षणैवेति सिद्धम्।

## प्रयोजनवती

यथा '**गङ्गायां घोषः**' इत्यत्र गङ्गाशब्दस्य भगीरथरथाङ्कखातावच्छिन्न जलप्रवाहोऽर्थः घोष इति शब्दस्य चाऽऽभीरग्रामः। ग्रामस्य जलप्रवाहे सत्ता न सम्भवत्येवेति तटे लक्षणाऽभ्युपगम्यते। न चाऽनुन्मत्तस्तटशब्दे प्रयोक्तव्ये गङ्गाशब्दं किञ्चित्प्रयोजनमन्तरा प्रयुञ्जीत, इतीह घोषे शैत्यपावनत्वादिप्रतीतिरूपं प्रयोजनमस्तीति प्रयोजनवतीयम्। गङ्गातटयोः सामीप्यश्चात्र सम्बन्ध इति। यद्यपि 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्देन प्रत्यायितं स्रोतस्तीरं लक्षयतीत्यर्थव्यापारो लक्षणा न तु शब्दव्यापारस्तथापि वाच्यधर्मो वाचके शब्दे आरोप्यते। अत आरोपितक्रिया शक्तिः शब्देऽपि वर्तत एवेति शब्दोऽपि लाक्षणिक इति। 'गङ्गायां घोषः' अत्रायमाशयः—गङ्गाशब्दस्य प्रवाहे सप्तम्या अधिकरणे घोषस्य चाभीरपल्ल्यां सङ्केतः। तेनाभिधया प्रवाहाधिकरणको घोष इत्यर्थो जायते। एष च मुख्यार्थोऽत्रानुपपन्नः। जलप्रवाहे घोषासम्भवात्। तेन गङ्गातीरे घोष इत्यर्थो लक्ष्यते। मुख्यार्थलक्ष्यार्थयोर्गङ्गातीरयोः सामीप्यादिश्च सम्बन्धः। घोषे च शैत्यपावनत्वद्योतनायैव मुख्यशब्दं विहाय लाक्षणिकः शब्दः प्रयुक्त इति शैत्यपावनत्वातिशयः प्रयोजनम्, इयमेव जहत्स्वार्थेत्युच्यते।

## [1]प्रयोजनवती शुद्धा

यथा 'कुन्ताः प्रविशन्ति' अत्र हि कुन्तशब्दस्य शस्त्रविशेषे शक्तिः, प्रविशन्तीत्यस्य च कुन्तकर्तृके अन्तःप्रदेशसंयोगानुकूले व्यापारे ( वैयाकरणमतेन ) तादृशव्यापारकर्तृत्वं जडे कुन्ताख्ये शस्त्रविशेषे स्वतो न सम्भवतीति कुन्तधारिपुरुषेषु लक्षणा भवति । कुन्तधारिण इति प्रयोक्तव्ये कुन्ता इति प्रयोगो विद्यते, निर्दयप्रहर्तृत्वादिकं प्रयोजनमिति प्रयोजनवतीयम् । कुन्तकुन्तधारिणोः सादृश्यातिरिक्तस्य संयोगसम्बन्धस्य सत्त्वादियं शुद्धा । मुख्यार्थबाधप्रतिसन्धानमपि व्युत्पन्नानामस्त्येवेति दर्शनात् कदाचिच्छक्तिभ्रमाद्बोधे तदभावेऽपि न क्षतिरित्यधिगमाच्च । इयमेव चाऽजहत्स्वार्थाऽपि उपादानेन चेयं लक्षणेत्यपि ध्येयम् ।

[2]मण्डनमिश्रास्तु 'गौरनुबन्ध्यः' इत्यादिकमुपादानलक्षणाया उदाहरणमाहुः । तेषामयमाशयो यदत्र गोत्वस्य यागं प्रति साधनत्वं शाब्दं व्यक्त्याक्षेपमन्तरेण नोपपद्यत इति तत्सिद्ध्यर्थतया व्यक्तेराक्षेपः । यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति वाक्ये रात्रिभोजनवानिति लक्ष्यते । भोजनाभावसमानाधिकरणपीनत्वयुक्तोत्कर्षस्य प्रतीतेः प्रयोजनस्य सत्त्वात् । सेयं लक्षणा 'दिवा न भुङ्क्ते' इति मुख्यार्थमादायैव भवतीत्यनुपादानरूपा । तन्न सम्यक्, दिवाभोजनाभावतः पीनत्वं विनाऽनुपपन्नमित्यनुपपत्त्या रात्रौ भुङ्क्ते इति शब्दः कल्प्यते—इत्यधिगमात् । श्रुतार्थापत्तेर्वा तस्य विषयत्वात् । नहि तत्र किञ्चित्प्रयोजनमप्यस्ति नापि च रूढिः ततः कथं लक्षणाप्रवृत्तिः स्यादिति संक्षेपः ।

---

१. शुद्धा लक्षणा सादृश्यातिरिक्तसम्बन्धात् भवति ।
गुणानां सादृश्यात् सादृश्यसम्बन्धा लक्षणा ।
इयं च लक्षणा गुणयोगात् गौणीत्युच्यते ।

२. श्रुतिविहिताऽनुबन्धनक्रिया कथं गोत्वजातेः स्यादिति मुख्यार्थबाधः । अतो जात्या गोत्वरूपया व्यक्तिराक्षिप्यते लक्ष्यते, न चेयं लक्षणलक्षणा, जातेः प्रकारत्वात् । किन्तूपादानरूपैवेति मण्डलनमिश्राशयः ।

## [1]सारोपा गौणी

यथा गौर्बाहीकः[2]। अत्र वाक्यार्थबोधे मतभेदः, तथाहि गौर्गोत्वं, बाहीको बाहीकत्वमित्युभयोरन्वयभेदः, अन्वयभेदाच्च मुख्यार्थबाधस्ततो लक्षणा। साहचर्यात् लक्षणया जाड्यात्वादयो लक्षिता अपि परार्थाभिधाने (स्वस्यान्यार्थाभिधाने) प्रवृत्तिनिमित्वमुपयान्तीति ततो बाहीकप्रतीतिरभिधयैव जायत इति केचन वदन्ति, एतेषामयमाशयो यद् गोशब्दात्प्रथमं लक्षणया जाड्याद्युपस्थितिस्ततोऽभिधया बाहीकस्य बोधः। अर्थात् गो शब्दो हि भिन्नार्थकत्वाद्बाहीकेन सहानुपपद्यमानसामानाधिकरण्यत्वेन बाधितमुख्यार्थः सन् स्वार्थसहचारित्वसम्बन्धेन जाड्यादिगुणान् लक्षयित्वा तानेव प्रवृत्तिनिमित्तीकृत्य बाहीकमभिधया बोधयतीत्यर्थः। परन्तन्नोपपन्नम्। गोपदस्य बाहीकशब्देऽसङ्केतितत्वात् सङ्केताभावेनाभिनाभिधाऽभावरूपा, अतो गोशब्दार्थबोधनानन्तरं चाभिधाया विरामः। जाड्यादिगुणानां लक्ष्यत्वाच्च। अन्ये त्विदं वदन्ति '**शक्यत्वेऽसति शक्यवृत्तित्वे सति स्वभिन्नावृत्तित्वं प्रवृत्तिनिमित्तत्वम्**' इत्यशक्यतया प्रवृत्तिनिमित्तत्वासम्भवः। अतो बाहीकार्थगतेषु जाड्यादिगुणेष्वेव लक्षणा। बाहीकार्थो नाभिधया प्रतीयते नापि समवायेन चेत्यन्ये। एकधर्मिबोधकत्वाभावाद् गौर्बाहीक इति सामानाधिकरण्यानुपपत्तेर्नेदमपि समीचीनमिति। अयं भावः—नाभिधया गोशब्देन बाहीकार्थः प्रतीयते, किन्तु गोत्वसहचारिसाजात्यसम्बन्धेन वाहीकार्थगता गुणा एव लक्ष्यन्ते। बाहीकार्थस्तु धर्मिरूपेणाक्षिप्यते। गोगतजाड्यमान्द्यादिसजातीयबाहीकगतगुणा इति बोधोऽस्मिन्मते दोषोऽयं गोशब्दाद् बाहीकार्थं प्रतीयते न वेति प्रश्नः। आद्ये बाहीकार्थे गोपदस्याऽसंकेतितत्वात् तत्प्रतीतिरसम्भवा। द्वितीये गौर्बाहीकपदयोः सामानाधिकरण्यमसम्भवम्। तस्माल्लक्षणयैव बोधः।

---

१. गुणयोगादियं गौणी। यथा शुद्धा सादृश्यातिरिक्तसम्बन्धा, तथा गौणी लक्षणा न भवति, गौण्यान्तु सादृश्य एव सम्बन्ध इति नियमः।

२. बाहीको नाम देशविशेषः तत्रत्यः पुरुषो बाहीक इति केचित्। अन्ये तु बहिर्भवो बाहीक इति व्युत्पत्या शास्त्रीयाचाराद् बहिर्भूत इति मन्यन्ते।

समानार्थकविभक्तिकयोरभेदान्वय इति। अतो गौर्वाहीकयोः सम्बन्धमपनीय साधारणगुणा जाड्यमान्द्यादयस्तदाश्रयत्वेन बाहीक एव गोशब्देन लक्ष्यते। अज्ञत्वाद्यतिशयबोधनश्चात्र प्रयोजनम्। अर्थात्—गौः पशुः, बाहीकस्तु नरः, तेन गोशब्दार्थो बाहीकार्थेन सहाऽन्वयमलभत्—इत्येष मुख्यार्थबाधः। अज्ञत्वादिसादृश्यमत्र सम्बन्धः। ततो गोगतजाड्यमान्द्यादिसजातीयगुणाश्रयो बाहीक इति बोधः। जाड्याद्यतिशयश्च प्रयोजनम्। इयं गुणयोगाद्गौणीत्युच्यते। अत्र मते तु जाड्यादिगुणविशिष्टे लक्षणेति तत्सामानाधिकरण्यानुपत्तिरित्यपरे 'स्वीया' इति दिक्।

## लक्षणाभेदोपयोगविवेचनम्

पूर्वोक्तेषु लणक्षाभेदेषु निरूढा सम्बन्धिनो भेदद्वयस्य साहित्यशास्त्रे न क्वापि तथाविधश्चमत्कृतिजनक उपयोगो दृश्यते। तस्या व्यङ्ग्यशून्यत्वात्। व्यङ्ग्यस्यैवात्र चमत्कृत्याधायकत्वात्। तेन भेदद्वयमेतदाश्रित्य न कश्चन ध्वनिः। न चापि कश्चनाऽलङ्कार एव समायाति दृग्विषयताम्। प्रयोजनवत्या भेदेषु पुनर्गौणी सारोपा रूपकालङ्कारे, गौणी साध्यवसाना च रूपकातिशयोक्तौ, शुद्धा सारोपा साध्यवसाना चेत्युभयमुभयविधे हेत्वलङ्कारे उपयुज्यते। अवशिष्टे भेदद्वये शुद्धां जहत्स्वार्थामाश्रित्य अत्यन्त-तिरस्कृतवाच्यनामको ध्वनिभेदः। शुद्धामजहत्स्वार्थामाश्रित्य तु अर्थान्तरसङ्क्रमितवाच्यनामकः स प्रसरसीत्यवध्येयम्।

## गूढव्यङ्ग्यलक्षणा

उदाहरणं यथा—

**मुखं विकसितस्मितं वसितवक्रिमप्रेक्षितं,**
**समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः।**
**उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं,**
**बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ १ ॥**

अत्र विकसितत्वं पुष्पधर्मः स च मुखे बाधितः प्रसरत्वं (साति

शयत्वं ) लक्षयति, सामान्यविषयभावसम्बन्धः, रामणीयकत्वं ( सौरभादि ) व्यङ्ग्यम् । वशीकरणं चेतनधर्मः, स च प्रेक्षिते बाधितः, अभिमतविषयप्रवृत्तिः सम्बन्धः, युक्तानुरागित्वं व्यङ्ग्यम्, समुच्छलनं मूर्तधर्मः, स च गतौ बाधितः, बाहुल्यं लक्षयति, कार्यकारणभावः सम्बन्धः, अतिशयो व्यङ्ग्यः । अपासनं चेतनधर्मः स च मतौ बाधितः त्यागं लक्षयति सामान्यविशेषभावः सम्बन्धः अनुरागातिशयो व्यङ्ग्यः, मुकुलनं पुष्पधर्मः स च स्तनयोर्बाधितः; उद्भिन्नत्वं लक्षयति, ताद्रूप्यसम्बन्धः मनोहारित्वं व्यङ्ग्यम् । उद्धुरत्वं शकटधर्मः स च जघने बाधितः, भारसहनक्षमत्वं लक्षयति, सामान्यविशेषभावः सम्बन्धः, उपभोगयोग्यत्वं ( रमणीयत्वं ) व्यङ्ग्यम् । प्रमोदश्चेतनधर्मः स च तरुणिमोद्गमे बाधितः, अनियन्त्रणीयतां लक्षयति, जन्यजनकभावः सम्बन्धः, स्पृहणीयत्वं व्यङ्ग्यम्, अत्रैतानि व्यङ्ग्यानि काव्यवासनापरिपक्वबुद्धेः सहृदयस्यैव प्रकाशन्ते इति गूढत्वाद् गूढव्यङ्ग्यमिदम् ।

## अगूढव्यङ्ग्यलक्षणा

यथा—

**‘श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचारितानाम् ।**
**उपदिशति कामिनीनां यौवनमद एव ललितानि ॥’**

इत्यत्रोपदिशतीति पदम् अगूढव्यङ्ग्यपरमन्यत्सर्वं स्पष्टम् ।

## साहित्यदर्पणीयलक्षणाभेदप्रदर्शनम्

पूर्वं साहित्यदर्पणोक्तलक्षणाया अशीतिभेदा इह विन्यस्यते, ततस्तदालोचनम् । यथा-(१) सारोपा उपादानलक्षणा रूढिविषया-अश्वः श्वेतो धावति । ( २ ) सारोपा उपादानलक्षणा प्रयोजनविषया-एते कुन्ताः प्रविशन्ति । ( ३ ) सारोपा लक्षणलक्षणा रूढिविषया-कलिङ्गः पुरुषो युध्यते । ( ४ ) सारोपा ल० ल० प्रयोजनविषया-आयुर्घृतम् । ( ५ ) साध्यावसाना उपा० रूढिविषया-श्वेतो धावति । ( ६ )साध्यवसाना उपा० प्र० विषया—कुन्ताः प्रविशन्ति । ( ७ ) साध्यवसाना ल० ल० रूढिविषया—कलिङ्गः साहसिकः । ( ८ ) साध्यवसाना ल०

ल० प्रयोजनविषया-गङ्गायां घोषः। (९) गौणी सारोपा उपा० रूढिविषया-एतानि तैलानि हेमन्ते सुखानि। (१०) गौणी सारोपा उपा० प्रयोजनीया-एते राजकुमारा गच्छन्ति। (११) गौणी सारोपा ल० ल० रूढीया-राजा गौडेन्द्रः कण्टकं शोधयति। (१२) गौणी सारोपा ल० ल० प्रयोजनविषया-गौर्वाहीकः। (१३) गौणी साध्यवसाना उपादान० रूढिविषया-तैलानि हेमन्ते सुखानि (१४) गौणी साध्य० उ० प्रयोजनवती-राजकुमारा गच्छन्ति। (१५) गौणी साध्यवसाना ल० ल० निरूढा-राजा कण्टकं शोधयति। (१६) गौणी साध्यवसाना ल० ल० प्रयोजनवती-गौर्जल्पति। अत्राष्टप्रकारा प्रयोजनलक्षणव्यङ्ग्यस्य गूढाऽगूढत्वात् हेतोः-षोडशधा भवति षोडशप्रकारा च सा धर्मिधर्मगतभेदेन द्वात्रिंशत्प्रकारा भवति। तथाविधा चेयं निरूढालक्षणाभिरष्टाभिः साकं चत्वारिंशद् विधा सम्पद्यते। अथ प्रत्येकं पदवाक्यगतत्वेन द्विधा भूत्वा अशीतिप्रकारा जायते। इतीह छात्रजनानां त्वरितावबोधनार्थमपि सोदाहरणपुरस्सरं लक्षणायाः पूर्वोक्ता अशीतिभेदा विन्यस्ता दर्पणत एवेति संक्षेपः। एवं दर्पणकारस्यैष एतावान् विस्तारः खलु केवलं छात्रजनक्लेशावह एव प्रतीयते, चमत्कारशून्यो नाधिकोपयोगी च। एषु भेदेषु केचनाऽसम्भविनः परे तु चत्मकृतिशून्या निरर्थका अपि। तथाहि, सामान्यतस्तद्दिग्दर्शनमेवम्—

## साहित्यदर्पणीयलक्षणाभेदालोचनम्

निरूढाया यद् भेदाष्टकमभ्युपपन्नं तदनुचितमेव। निरूढाया रूढमूलकत्वेन व्यङ्ग्यशून्यतया तद्भेदप्रपञ्चस्य प्रयोजनरहितत्वात्। प्राचीनैस्तु शुद्धा गौणीति भेदद्वयमपि नाऽस्याः स्वीकृतम्। ते जानन्ति स्म यत् सादृश्यसम्बन्धो वा तदितरसम्बन्धो वा मूलमस्या भवतु। किन्तु रूढलक्ष्यशब्दप्रवर्त्तनं जनतायामेवायतते। न तत्र वक्तुर्लेशोऽपि स्वातन्त्र्यस्य। अतो निरूढाभेदप्रपञ्चः केवलं क्लेशावह एव प्रतीयते। अस्तु, निरूढायाः सादृश्यतदितरसम्बन्धाद् गौणीत्वं शुद्धात्वञ्चेति भेदद्वयं मध्यवर्तिभिराचार्यैरस्याः समादृतम्। जहत्स्वार्थादिकं तु तत्र

सर्वथाऽनपेक्षितम्, फलानुपधायकत्वात् । तेन द्विविधैव निरूढेत्यधिकभेदकल्पनं प्रयासमात्रमेव ।

सम्प्रति प्रयोजनवत्या भेदेषु विचार्यते । तत्र गौण्या जहत्स्वार्था, अजहत्स्वार्था चेति भेदद्वयं न सम्भवति, ततः सा सर्वथा जहत्स्वार्थैव भवति, नाजहत्स्वार्था । तथाहि-काव्यप्रकाशकारः–'**शुद्धैधा सा द्विधा**' इति । प्रतीकं विवृण्वता प्रदीपकारेण तत्रोक्तं निभालनीयम् । ततश्चान्त्ये सादृश्येतरसम्बन्धसत्त्वे कथं गौणी, सादृश्यप्रयुक्तलक्षणाया एव गौणीत्वादिति फलितं भवति । तस्माद् गौण्या अजहत्वार्था, जहत्स्वार्थेति भेदद्वयकल्पनं निरर्थकमेव । तस्याः सर्वदा जहत्स्वार्थात्वेन तादृशभेदासम्भवात् । तेन प्राचीनानां परिपाट्या सारोपा, साध्यवसानेति भेदद्वयमेव समीचीनम्, इति सिद्धम् । ततश्च नाष्टविधत्वं गौण्याः किन्तु षड्विधत्वमेवेति सिद्धम् ।

अथ च गूढव्यङ्ग्यस्य कतिपयजनमात्रवेद्यत्वात्, अगूढव्यङ्ग्यस्य तु सकलजनसंवेद्यत्वात्—चमत्कारतारतम्यं पश्यतां विपश्चितां षड्विधायाः प्रयोजनवत्याः प्रत्येकं द्विविधत्वेन काव्यप्रकाशोक्तरीत्या द्वादशविधत्वं भवेदभ्युपगन्तव्यम् । किन्तु धर्मधर्मिगतत्वेन पदवाक्यगतत्वेन च भेदप्रकल्पनं तु निरर्थकमेव प्रतिभाति, ईदृशभेदप्रकल्पनस्य चमत्कारशून्यत्वात् । लक्षणाया वस्तुतोऽर्थसम्बन्धत्वेन साक्षात्पदवाक्यगतत्वाभावात् । धर्मधर्मिगतत्वादिकल्पनावत् । जातिगुणक्रियादिगतत्वेनाऽपीदृशनिरर्थकाऽनेकभेदप्रकल्पसम्भवाच्चेति सुधीभिर्ध्येयम् । तदेवमेतावान् अधिकभेदप्रपञ्चो दर्पणकारस्य केवलं छात्रजनक्लेशवर्धनफल एवेति प्रतीम, इति पूर्वोक्ताश्चतुर्दशभेदा एव लक्षणाया अवशिष्यन्ते, त एव चात्र साहित्यशास्त्रे चमत्कारविधायका इतीतो विरम्यते ।

## व्यञ्जनानिरूपणम्

शाब्दबोधस्थलेऽयमस्ति साधारणो नियमः, यत्पदज्ञानं कारणं भवति, पदजन्यपदार्थस्मृतिर्व्यापारः, आकाङ्क्षादिसहकारिकारणम्, पदजन्यपदार्थस्मृतिश्च वृत्तिः, सापेक्ष्या, तत्र वृत्तिः केषाञ्चिन्मते द्विधा,

शक्तिर्लक्षणा चेति। केचित्तृतीयां तात्पर्याख्यां मन्यन्ते, आलङ्कारिकास्तु चतुर्थीं व्यञ्जनामपि। एतेषामयमभिप्रायः 'गङ्गायां घोषः' इत्यादौ जलप्रवाहरूपं मुख्यमर्थं बोधयित्वाऽभिधाविरता न पुनः सा संसर्गात्मकतात्पर्यरूपार्थं बोधयितुं क्षमा, नापि च तटरूपलक्ष्यार्थप्रतिपादने शक्तेति। 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादित्युक्तेः'। ततो मुख्यार्थबोधने उपक्षीणायामभिधायां संसर्गार्थबोधने विरतायां तात्पर्यायां तटादिकं लक्षीकृत्य श्रान्तायां लक्षणायां च येन केनापि रूपेण शैत्यपावनत्वादिप्रतीतिः स्यात्? प्रकृते तु तदर्थं व्यञ्जनाव्यापारः, स चावश्यं स्वीकार्यः। अन्यथा स्वायत्ते शब्दप्रयोगे एव व्यर्थं स्यात्। शैत्यादिप्रतीतेर्लक्ष्यत्वे प्रयोजनान्तरकल्पनानवस्थापातात्। तस्मादत्र शैत्यपावनत्वप्रतीतिर्व्यञ्जनयैव। यदि नाम व्यञ्जनाव्यापारो न स्यात्? नह्येवमादिस्थले रूढिमूला लक्षणा, न च शैत्यपावनत्वादिरूपेऽर्थे गङ्गादिपदस्य सङ्केतः, नैव च शैत्यादिरूपोऽर्थो लक्ष्यः मुख्यार्थबाधाभावात्। यथा नाम गङ्गाशब्दस्तटरूपार्थबोधनेऽसमर्थः, तथैव शीताद्यर्थबोधनेऽसमर्थः न निर्व्यापाराच्छब्दात्कस्याप्यर्थस्य प्रतीतिरिति केषाञ्चिन्मतं सम्मतम्। अनिवार्यश्चोक्तप्रत्यय उक्तवाक्यात्। तस्मात्प्रयोजनप्रत्ययार्थं व्यञ्जनाव्यापारोऽभ्युपेयः। व्यञ्जनां बिना कथमन्यथा[1] तत्प्रतीतिरिति विस्तारस्तु सहृदयैः स्वयमेवाध्यवसेयः।

## व्यञ्जनोदाहरणानि

गङ्गायां घोष इत्यादौ शैत्यपावनत्वप्रतीतिरनपलापार्हा। सा च प्रतीतिर्व्यञ्जनयैव। तत्र सङ्केताभावान्नाभिधा। सा प्रवाहरूपार्थं प्रबोध्य विरता। संसर्गबोधमात्रे क्षीणा च तात्पर्याख्या वृत्तिरपि नात्रोपयोगिनी। न चात्रलक्षणा मुख्यार्थबाधाभावात्। लक्ष्यार्थबोधानन्तरं व्यङ्ग्यार्थबोधनेऽसामर्थ्यात्। शैत्यादिप्रतीतेर्लक्ष्यत्वे प्रयोजनान्तर-

---

१. मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना।

कल्पनावस्थापातात् । तस्मादत्र शैत्यपावनत्वप्रतीतिर्व्यञ्जनयैवेति पूर्वोक्तम् । अथाधुनात्र [1]प्रसङ्गसङ्गतिप्रदर्शनाय पूर्वं त्वभिधालक्षणा-मूलकव्यञ्जनास्वरूपं निरूप्य पश्चात्तदुदाहरणादिकं दर्शयिष्यते । तत्राभिधामूलामाह—'**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ।**' **अञ्जनं व्यञ्जनं**, व्यञ्जनाशक्तिरिति यावत् । व्यज्यते शब्दाप्रतिपाद्यः कश्चिद्विलक्षणो लक्षणयाऽप्रतिपाद्योऽर्थोऽनयेति निर्वचनात् । नियन्त्रणमपरार्थोपस्था-पनप्रतिबन्धः । व्यापृतिर्व्यापारत्वम् । संयोगादयोऽनुपदं वक्ष्यन्ते । नानार्थस्य शब्दस्य सर्वेष्वर्थेषु सङ्केतग्रहस्य तुल्यत्वात्तस्मिञ्छ्रुतिमात्रे सकलार्थानामुपस्थितौ शब्दस्यास्य कस्मिन्नर्थे तात्पर्यमिति सन्देहे समु-पस्थिते संयोगाद्यैर्वाचकत्वे नियन्त्रिते पदार्थान्वयबोधनाय वाच्यार्थ-भिन्नस्यार्थस्य समुद्भावयित्री शक्तिर्व्यञ्जनेति पर्यवसितोऽर्थः सा च द्विधा—शाब्दी, आर्थी च । शाब्दी द्विधा, अभिधालक्षणामूलत्वात् । तत्र तत्र प्रथमं [2]प्रसङ्गसङ्गत्या लक्षणामूलेह लक्ष्यते ।

**'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥'**

---

१. 'तद्भूर्लाक्षणिकस्तत्र व्यापारो व्यञ्जनात्मकः ।' तद्भूर्लक्षणाश्रयः शब्दो लाक्षणिकः कथ्यते । तत्र लाक्षणिके शब्दे व्यज्यते विलक्षणोऽर्थोऽनयेति व्यञ्जना । तदात्मको व्यापारः । व्यञ्जनामलक्षयद्विश्वनाथः—'विरतास्वभिधा-दीनां ययाऽर्थो बोध्यतेऽपरः । सा वृत्तिर्व्यञ्जना नाम शब्दादीनां निगद्यते' । इति । केचित्तु—शक्यलक्ष्यातिरिक्तार्थबोधिका वृत्तिर्व्यञ्जनेति ।

२. एतदुदाहरणानि—सशङ्खचक्रो हरिरित्यादीनि काव्यप्रकाशादौ द्रष्ट-व्यानि । ( १ ) त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता । यथा—वाच्यार्थव्य-ञ्जना 'कालो मधुः०' इत्यादि । लक्ष्यार्थस्य यथा—'निःशेषच्युतचन्दनम्' इत्यादि । व्यङ्ग्यार्थस्य यथा—'पश्य निश्चल निस्पन्दा' इत्यादि । ( २ ) कारिकापादितकाक्वादीनामुदाहरणानि काव्यप्रकाशादौ विलोक्यानि । काव्य-मार्गे स्वरो न गण्यते—यतः स्वरभेदे अर्थभेदः, अर्थभेदे च शब्दभेदः । स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यार्थप्रत्यायने एव निमित्तीभवन्ति । न खलु उपर्युक्त अनेकार्थस्यैकार्थनियन्त्रणरूपं विशेषणम् । अत उक्तं काव्य प्रकाशे ।

अर्थाद् यस्य शैत्यपावनत्वादिरूपफलस्य प्रतीतिमनुभवरूपामाधातुं जनयितुं लक्षणा लाक्षणिकः शब्दः समुपास्यते। सत्यपि वाचकशब्दे तं विहायाऽऽद्रियते-इत्यर्थः। शब्दैकगम्ये लाक्षणिकशब्दमात्रगम्ये अत्र तस्मिन् फले (शैत्यपावनत्वादिरूपे) व्यञ्जनात् व्यञ्जनं विहाय, अपरा क्रिया अन्यो व्यापारो न-नहि। किन्तु तत्र व्यञ्जनात्मक एव व्यापार इति। यथा-'**नाभिधा समयाभावाद्**' '**हेत्वभावान्न लक्षणा।**' अर्थात्—गङ्गायां घोष इत्यादौ शैत्यादयो धर्मास्तटादौ प्रतीयन्ते तत्र गङ्गादिशब्दानां नाभिधा सङ्केताभावात्। नापि च लक्षणा रूढिप्रयोजनयोरभावात्। किन्तु व्यञ्जनैव, किञ्च—

**'अद्यारभ्य चिरं साधो निःशङ्कमिह सञ्चर।**
**रेवाकुञ्जमृगेन्द्रेण स श्वाऽद्य प्रतिघातितः॥'**

अत्र भिक्षुं प्रत्येवं वदन्त्याः कुलटायाः प्रतिवेशिनं प्रति निःशङ्करत्यभिधानं स्फुटम्, तदेतद् व्यञ्जनां विना नैव लब्धव्यम्। एवमनुमित्या व्यक्तिं गतार्थयतो व्यक्तिविवेकं कृतवतो महिमभट्टाचार्यस्यापि मतं न युक्तं गौरवात्। तदग्रे स्फुटीभविष्यति।

**'प्रयोजनेन सहितं लक्षणीयं न युज्यते।**
**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम्॥'**

ननु पावनत्वादियुक्ते तटे लक्षणैवास्तु तत्किं व्यञ्जनयेत्याशङ्क्याह—प्रयोजनेन पावनत्वादिना सहितं लक्षणीयं लक्षणाजन्यज्ञानविषयो न युज्यते यतो हि ज्ञानस्य विषयः ज्ञानादन्यस्तथा ज्ञानस्य फलमपि ज्ञानादन्यत्, फलफलिनोः समसमयसमुत्पादासम्भवादिति '**विशिष्टे लक्षणा नैवेति**' संक्षेपः।

अत्र विस्तारस्त्वित्थम्-ननु गङ्गातटे घोष इत्यादि स्वशब्दाद् यादृगर्थप्रतीतिर्न भवति तादृशी गङ्गायां घोष इत्यादेस्तदेव प्रयोजनं पावनत्वादिधर्माक्रान्तञ्च तटादि लक्ष्यते इति विशिष्टे लक्षणा न तु लक्षिते विशेषः। एवं हि तटादेः पावनत्वादीनां च धर्मधर्मिभावश्चतुर्थो व्यापार उररीकर्तव्यः लक्षणाफलं च कथमन्येन क्रियते।

न च व्यापारस्य लक्षात्मनो व्यञ्जनात्मा व्यापारो भवति। शब्द-

स्यासाविति चेन्न, तर्हि लक्षणायाः प्रयोजनं तस्माद्विशिष्टमेव लक्ष्यते। अत उच्यते–लक्षणायास्तटादिविषयास्ते च पावनत्वादयो न सन्ति। तत्कथं विशिष्टे लक्षणा। सामान्यनिष्ठश्च सङ्केत इति त्रितयात्मना संकेतभेदेन लक्षणा सा कथं विशिष्ट गोचरीकुर्यात्। व्यज्यते त्वसंकेतित एव। किञ्च लक्षणाया गोचरो लक्ष्यो न प्रयोजनम्। प्रत्यक्षस्य हि नीलं विषयः। प्रकटता संवित्तिर्वा फलम्। अव्यभिचाराच्च लक्ष्यसंवित्फलत्वेनोक्ता। एवमभिधाया अपि फलं शब्दस्य च व्यापारस्य संविदेव फलम्। तच्च विना व्यापारान्न सम्भवति, न च व्यापारस्य व्यापार इति शब्दस्यैवासौ वाच्यः। लक्षणान्वयव्यतिरेकानुविधानं सव्यापारस्य फलस्येति तस्यास्तत्कार्यं कार्यं च फलमुच्यते। क्रियान्तरप्राप्यस्य योगफलत्वमिव व्यञ्जनशक्तिनिर्वर्त्यस्य प्रयोजनस्य लक्षणाफलत्वम्, नीलविषयस्य सप्रमाणस्य यथा नीलनिष्ठैव प्रकटता संविद्वा फलम्। तद्वल्लक्षणायास्तद्विषयनिष्ठमेव सिद्धमेतल्लक्षणाया अतिरिक्तो व्यापारः समाश्रयणीयः स च प्रकृते लक्षणामूलकव्यञ्जनैवेति राजनकमम्मटाचार्यः। अत उक्तं प्रकाशे—

**'विशिष्टे लक्षणा नैवं विशेषाः स्युस्तु लक्षिते॥'**

एवं लक्षणामूलकव्यञ्जकत्वमुक्त्वा सम्प्रत्यभिधामूलं निरूप्यते। तल्लक्षणादिकन्तु ( **अनेकार्थस्येति०** ) पूर्वोक्तमेव तदिह तत्र नानार्थशक्तिनियमनाय संयोगादयस्ते प्रदर्श्यन्ते। यथा—

**संयोगो विप्रयोगश्च साहचर्यं विरोधिता।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।**
**शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥**

अनवच्छेदे तात्पर्यसन्देहे। विशेषस्मृतिरेकार्थमात्रविषया स्मृतिः। इत्थञ्च सुरभि मांसं भक्षयतीत्यादेर्वाक्याज्जायमाना द्वितीया प्रतीतिर्गवाद्युपस्थितेरभावात् कथं स्यादिति तदुपस्थित्यर्थव्यञ्जनाव्यापारोऽभ्युपेय इति।

**'तद्युक्तो व्यञ्जकः शब्दो यत्सोऽर्थान्तरयुक् तथा॥'**

अर्थात्-तया व्यञ्जनया युक्तः शब्दो व्यञ्जक उच्यते । यतः सशब्दोऽर्थान्तरयुक्-व्यञ्जनकत्वे । अर्थात् शब्दोऽर्थान्तरमपेक्षते, एवमर्थोऽपि शब्दम् । '**न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते**' इति न्यायात्, एकस्य व्यञ्जकत्वेऽन्यस्य सहकारोऽवश्यमङ्गीकर्त्तव्यः ।

शाब्दीं व्यञ्जनामुक्त्वा सम्प्रत्यार्थी व्यञ्जना निरूप्यते यथा—'**वक्त्रादीनां च वैशिष्ट्यादार्थी सा व्यञ्जनोच्यते ।**' आदिपदात् प्रतिपाद्यः काकुचेष्टादिपरिग्रहः । वैशिष्ट्याद् विशेषयोगात्, यथा 'गतोऽस्तमर्कः' इति, वाक्येन द्विजातौ वक्तरि प्रतिपाद्ये वा—'**सन्ध्यावन्दनस्यायमवसरः**' इति' गोपालबालके वक्तरि प्रतिपाद्ये वा '**संह्रियन्तां गावो गृहं प्रति निवर्तयामहे**' इत्यादिका अर्था वक्त्रादिवैशिष्ट्यात्प्रतीयन्ते ।

## ध्वनिनिरूपणम्

अथासंख्यभेदस्यापि ध्वनेः केऽपि भेदा इह प्रदर्श्यन्ते । तथा हि—'**काव्यस्यात्मा ध्वनिः**' इत्यानन्दवर्धनाचार्यः । स चायं द्विविधः, लक्षणामूलोऽभिधामूलश्च । अभिधामूलस्त्रिधा । रसध्वनिर्वस्तुध्वनिरलङ्कारध्वनिरिति भेदात् । लक्षणामूलो द्विधा । अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च । एवं पञ्चात्मकोऽप्ययं शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति भेदाभ्यां दशविधः । एवं भेदप्रभेदप्रपञ्चेनायं [1]'**भेदास्तदेक-**

१. ध्वनेरेकपञ्चाशत् (५१) शुद्धभेदाः—लक्षणामूला ध्वनिः, अर्थान्तरसंक्रमितवाच्य-अत्यन्ततिरस्कृतवाच्यभेदाद् द्विविधोऽपि पदवाक्यगतत्वेन चतुर्विधः । असंलक्ष्यक्रमव्यङ्ग्यस्तु पदपदांशवर्णरचनावाक्यमहावाक्यगतत्वेन षड्विधः । शब्दशक्त्युत्थः संलक्ष्यक्रमव्यङ्ग्यः —वस्त्वलङ्कारयोः स्वतःसिद्धकविप्रौढोक्तिसिद्ध-कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेन षड्विधयो वस्त्वलङ्कारव्यञ्जकत्वेन द्वादशविधोऽपि पदवाक्यमहावाक्यगतत्वेन त्रैविध्यात् षट्त्रिंशत्प्रकारः । उभयशक्त्युत्थस्तु वाक्यगत एक एव । ( पूर्वञ्च त्रिंशद् भेदा उक्ताः ) तत्रार्थशक्तिमूलध्वनेः प्रबन्धप्रकाश्यत्वेन पुनर्द्वादशविधत्वम् । असंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्धप्रकाश्यत्वेन चतुर्विधत्वम् । इति मिलित्वा एकपञ्चाश-

पञ्चाश'दित्यन्तेन मम्मटमतेनैकपञ्चाशद्विधः। तावद्विधोऽपि सङ्कर-संसृष्टिभ्यामपोद्वेलितोऽयं **'वेदाखाब्धिवियच्चन्द्राः, शरेषुयुगखेन्दवः'** इति मम्मटमतेनानन्त इति मत्वा विषयादस्माद् विरम्यते। एतद्र-हस्यावगमाय ध्वन्यालोकावलोकनं काव्यप्रकाशावलोकनञ्च सहृदयैः कर्त्तव्यम्।

## काकुवैशिष्ट्याद्वाक्यस्य व्यञ्जकत्वम्

**'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनया'**मित्यादौ मयि भीम-विषये खेदं भजति नाद्यापि कुरुष्विति काकोर्वैशिष्ट्यान्मयि न योग्य-मिति मात्सर्यम्। नन्वत्र काकुव्यङ्ग्येन वाच्यस्य सिद्धिः शोभनत्व-निष्पत्तिः तथा चापराङ्गतया व्यङ्ग्यं गुणीभूतम्, अतो न ध्वन्यङ्ग-काकुरिति चेदुक्तव्यङ्ग्यस्य क्रोधापकर्षपर्यवसन्नतया वाच्यस्यैव तदङ्ग-त्वात्। अत उक्तं मूले न वाच्यसिद्धयङ्गं काकुः, तथापि काक्वाक्षिप्त-व्यङ्ग्यरूपगुणीभूतप्रभेदता कथमपनेयेति चेन्न, अत्र नेति प्रश्नकाक्वापि वाक्यार्थप्रतीतिपर्यवसानात्। यां काकुं बिना वाक्यार्थबोध एव नोप-पद्यते तयैवाऽऽक्षिप्तस्य गुणीभावात् यथा–**'मथ्नामि कौरवशतमि'**त्यादौ तादृशे वक्तरि तदेवोक्तं, प्रश्नमात्रेणापि काकोर्विश्रान्तेः। कुरुषु न भजति नञ् काकुः, किमर्थं ततः प्रश्नरूपः आक्षिप्त एवेति तस्यैव गुणी-भूतो न्याय्यः, न तु क्रमेणापि काक्वा गुणीभूतव्यङ्ग्यत्वेऽपि काकुवैशि-ष्ट्योदाहरणतया न क्षतिः तथापि सुहृद्भावेन वस्तुस्थितिकथनायैतच्छ-ङ्कोत्थापनं बोध्यमिति निर्णीतम्।

## रसनिरूपणम्

श्रुतिषु **'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति'** इति

---

द्विधो ध्वनिरिति भेदप्रदर्शनं दर्पणरीत्याऽपि कृतम्। अधिकन्तु पाठकैस्तत्र तत्र स्वयमेव कर्तव्यम्। 'रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः। उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्। लोके यः कार्यरूपः सोऽनुभावः काव्य-नाट्ययोः। विशेषादाभिमुख्येन चरणाद् व्यभिचारिणः। अविरुद्धा विरुद्धा वा यंतिरोधातुमक्षमाः। आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः'।

श्रूयते । आनन्दो ह्ययं न लौकिकसुखान्तरसाधारणः । अन्तःकरणवृत्तित्वात्, स्वसंवेद्यत्वाच्च । भागवताप्यत एव तन्महत्त्वं **'सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्'** इत्यादिना प्रतिपादितम् । तदयं श्रुतिप्रतिपादितो भगवद्गीतः सहृदयहृदयैरास्वाद्यमानः **'को नाम रसः'** इति साम्प्रतं विविच्यते । **'विभानुभावव्यभिचारिभिरभिव्यक्तः स्थायीभावो रस इति'** भरतमतम् । मम्मटपादैरप्येतदेवानुमतम् । अत एव साहित्यदर्पणकारोपीत्थम् । **'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा । रसतामेति रत्यादिः स्थायीभावः सचेतसाम् ॥'** व्यक्तो व्यक्तिविषयीकृतः । व्यक्तिश्च भग्नावरणाचित् । यथाहि शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितानर्थान्प्रकाशयति स्वयञ्च प्रकाशते तथात्मचैतन्यं विभावादिसम्बलितान् रत्यादीन् प्रकाशयति चर्वणानिष्ठत्वात् । चिद्गताऽऽवरणभङ्गश्चर्वणा । तदाकारान्तःकरणवृत्तिः । सेयं परब्रह्मास्वादात्समाधेर्विलक्षणा, विभावादिविषयसम्वलितचिदानन्दालम्बनत्वात् । अथास्यां सुखांशभागे किं मानमिति चेत्समाधावपि तद्भाने किं मानमिति पर्यनुयोगस्य तुल्यत्वात् । व्यञ्जकविभावादिचर्वणाया, आवरणभङ्गस्य वा, उत्पत्तिविनाशाभ्यां रसे उत्पत्तिविनाशावुपचर्येते । तस्माद्[1] भग्नावरणचिद्विशिष्टो रत्यादिः स्थायीभावो रस इति निर्विवादम् ।

## रससूत्रव्याख्यानसङ्कलनम्

तत्र रसप्रतिपादकं भरतसूत्रश्चानेके आचार्या विवेचितवन्त इति

---

१. ननु कथं शोकादिसम्भिन्नत्वे करुणादीनां रसत्वम् ? न च तेषां रसत्वं नास्तीति वाच्यम् । तर्हि तत्प्रधाने काव्ये सामाजिकानां प्रवृत्तिर्न स्यात् । न च रतिरिव शोकोऽपि ज्ञानसुखात्मक इति केषाञ्चिद्वचनं ग्राह्यमिति वाच्यम् । कुत्राप्येतस्याश्रुतचरत्वात् । अश्रुपातादेर्दुःखाद्याविष्कारादिति चेदुच्यते यद्यपि करुणो रसः सुखदुःखसम्भिन्नः, तथापि शोकावच्छिन्नस्य चैतन्यस्यानन्दांशे भग्नावरणस्य करुणारसत्वे निरतिशयस्यानन्दांशस्योत्कटेच्छाविषयत्वात्, शोकांशे बलवद्द्वेषाभावात्तत्र प्रवृत्तिः न पुनर्दुःखादित्यादिकं सारबोधिन्यादौ स्पष्टीकृतम् । एवमेव बीभत्सभयानकयोरपि रसत्वं साधनीयम् ।

तत्तत्सूत्रव्याख्यानप्रसङ्गेन तेषामाचार्याणां काव्यप्रकाशोक्तानि चत्वारि मतान्येव रसविषयेऽत्र प्रदर्श्यन्ते। तथा सूत्रं **'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः'** इति। तत्र विभावयन्ति रत्यादीन् आस्वादयोग्यतां नयन्तीति विभावाः। अनुभावयन्ति रत्यादीन् स्थायिनोऽनुभवविषयतां नयन्तीत्यनुभावः। अनु-पश्चाद्भाव उत्पत्तिर्येषां ते वा। ये च रत्यादीन् स्थायिनः कार्ये चारयन्ति सञ्चारयन्ति मुहुर्मुहुरभिव्यञ्जयन्ति ते व्यभिचारिणो वा सञ्चारिणः सहचरन्तीति वा। संयोगो व्यञ्जनम्। निष्पत्तिः स्वरूपेण प्रकाशनम्,[1] एषां मध्ये कस्य-

१. 'मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः। येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः' ॥ तत्र—[ 'वासना चेन्न हेतुः स्यात्स स्यान्मीमांसकादिषु' इति, साहित्यदर्पणेऽपि। तथा च धर्मदत्तोऽपि—सवासनानां नाट्यादौ रसस्यानुभवो भवेत्। निर्वासनास्तु रङ्गान्तर्वेश्मकुड्याश्मसन्निभाः। वासना तावद् द्विधा प्राक्तनी, इदानींतनी च। द्विप्रकारयैतया वासनया वासितः, नियमेनेति स्थिरतरो भावः स्थायीभावः। स च विभावादिना व्यक्तः सन् रसः व्यक्तो दध्यादिन्यायेन रूपान्तरं परिणतो न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते ]। अत एवाभिनवगुप्तपादाः ध्वन्यालोकलोचने—'रसस्य प्रतीतिस्तावद् हि पिशाचवद् व्यवहार्येत्यादिकमाहुः'। अतएव निरावृतो दीप इव मनस आवरणे दूरीभूते निरावृतम् आत्मचैतन्यं ज्ञानास्वरूपतया प्राक्तनवासनावासितम्, इदानींतनवासनासम्पृक्तं विभावादिसम्बलितं रत्यादिस्थायिभावं प्रकाशयति। ये चान्तःकरणावच्छिन्नाः पदार्थास्ते सर्वेऽपि साक्षिभास्याः। यथा—किञ्चिज्ज्ञातुकाम आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, इन्द्रियञ्च पदार्थाकाराकारितं सत् परावृत्य मनसा संसृजते। अन्तःकरणे स्थितः पदार्थ आत्मप्रतिबिम्बेन प्रकाशते। प्रतिसंवेदी च पुरुषः। यथोक्तम्—'आत्मा बुद्ध्या समेत्यर्थान् मयो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति संप्रेरयति मारुतम्।' इत्थञ्च पदार्थज्ञाने चतस्रोऽवस्थाः—तथाहि आत्मा मनसा, मन इन्द्रियेण, इन्द्रियमर्थेन, संयुज्यते। एवं चतुष्टयसन्निकर्षो जाग्रदवस्था। आत्मा मनसा, मनो विषयेण, इति त्रितयसन्निकर्षः स्वप्नावस्था। आत्मा विषयेण इति द्वयोः सन्निकर्षः सुषुप्तिः। केवलात्मसन्निकर्षस्तुर्या। निस्तरङ्गमहोदधि-

चिदेकस्य रसान्तरसाधारणतया नियतरसव्यञ्जकतानुपपत्तेः सूत्रे मिलितानामुपादानम् । एवञ्च सिद्धे मिलितानां व्यञ्जकत्वे यत्र क्वचिदेकस्मादेवासाधारणाद्रसोद्बोधस्तत्रेतरद्वयमाक्षेप्यमिति सूत्रस्य फलितोऽर्थः । रसविषये रसगंगाधरे एकादशपक्षा अभिहिताः । यथाहि १. विभाव्यमानो विभाव एव रसः, २. अनुभाव एव रसः, ३. व्यभिचार्येव रसः ४. विभावनुभावव्यभिचारिषु यश्चमत्कारी स एव रसः, ५. त्रयः समुदिता रसः, ६. विभावादिपरिपुष्टरत्यादिस्थायीभावो रसस्तत्र भट्ट-

---

कल्पावस्थानं तु तुर्यातीतावस्था । अत्र तु यथा—स्वप्नतुरगादयः पदार्थाः साक्षिभास्यास्तथाविभावादिसम्बलितरत्यादयः । जाग्रदवस्था दृष्टान्तस्तु रज्जुरजतादि ज्ञेयम् । एष आवरणभङ्ग एव चोत्पद्यते, विनश्यति, तैनैव च रसेऽप्युपत्तिविनाशावुपचर्येते । यथा—कण्ठताल्वादिव्यापारस्योत्पत्तिविनाशाभ्यां ककारादौ चोत्पत्तिविनाशावुपचर्येत, उत्पन्नो हि गकारः, विनष्टो गकार इति च । एवञ्च विभावादिचर्वणमहिम्ना सहृदयस्य निजसहृदयतोन्मेषेण तत्स्थाय्युपाधिसम्बलितानन्दस्वरूपा योगिनः समाधाविव चित्तवृत्तिर्जायते । इत्थं रसे—उत्पत्तिविनाशावुपचर्येते इति-सिध्यति मूलोक्तप्रसङ्गसंघः । रसगङ्गाधरादिषु त्वेकादशमतानि रसविषये प्रकाशितानि परं तेषूपर्युक्त चत्वारि मतान्येव विशेषमहत्त्वयुक्तानि सम्मतानि, तत्रापि चतुर्थं ( अभिनवगुप्तमतं ) मतं सर्वसम्मतं सिद्धान्तभूतञ्चेति सुधीभिर्ज्ञेयम् ।

रसेऽभिनवगुप्तपादास्तु—एतादृशव्यापारद्वयकल्पने मानाभावात्, अधिकव्यापारकल्पने दोषाच्चेति स्थायिनां विभावादिभिः समं संयोगाद् व्यङ्ग्यव्यञ्जकभावरूपाद् सम्बन्धात्—विभावादीनामेव परस्परं मिलनात् वा रसस्य निष्पत्तिरभिव्यक्तिरिति भरतसूत्रार्थं सिद्धान्तयति लोके काव्यनाट्यभिन्नस्थले प्रमदादिभिः प्रमदोद्यानकटाक्षनिर्वेदादिभिः स्थायिनो रत्यादेरनुमानविषयेऽभ्यासः पुनःपुनरनुशीलनं तेन पाटवं पटुता तद्वत्तामयमेतद्विषयकरत्यादिमान् रत्यादिकार्यरूपकटाक्षादिसहकारिरूपनिर्वेदादिमत्वात् यो नैवं स यथा विरक्तरत्यादि—इत्यनुमानप्रयोगः । काव्ये उक्तध्वन्यादिरूपे नाट्ये नटकर्मणि तैरेव प्रमदादिभिरेव अभिव्यक्तः ।

लोल्लटमतम्, ७. श्रीशङ्कुकनैयायिकमतम्, ८. भट्टनायकमतम्, ९. अभिनवगुप्तपादसिद्धान्तः, १०. आत्मचैतन्यप्रकाशितः शुक्तौ रजतभ्रान्तिरिवानिर्वचनीयो रत्यादिः स्थायिभावो रस इति नव्यालङ्कारिकमतम्, ११. भ्रमरूपोऽयं रस इति नव्यपरालङ्कारिकमतमित्येकादश। भरतसूत्रस्य चतस्रो व्याख्या इत्थम्—तत्र यथा-मीमांसकरीत्या भट्टलोल्लटादयः—स्थायिनां विभावेनोत्पाद्योत्पादकसम्बन्धेन, अनुभावेन गम्यगमकसम्बन्धेन, व्यभिचारिणा पोष्यपोषकभावेन निष्पत्तिः। अयं भावः—विभावेन जनितः, अनुभावेन प्रतीतियोग्यः कृतः, सञ्चारिभिरुपचितो रामादिस्थितोऽपि नटनैपुण्येन सहृदयानां रसपदवीमारोहति। यथा-असत्यपि सर्पे सर्पतयाऽवलोकनाद् दाम्नोऽपि भयमुत्पद्यते, अथ चासति रजते रजतत्वेन विलोकनात् शुक्तौ ग्रहणबुद्धिरुदेति। तथा शकुन्तलाविषयिणी दुष्यन्तरतिविद्यमानापि अनुकर्त्तरि नर्त्तके नाटचनैपुण्येन वास्तविकीव वर्त्तमाना सहृदयान् चमत्कुरुते। इत्थञ्च रसोऽनुकार्यगतो धर्म्यंशे लौकिक आरोप्यांशे त्वलौकिक इति भट्टलोल्लटप्रभृतयः।

तन्न रुचिरम्—सामाजिकेषु रसनिष्पत्त्यभावे तत्र चमत्काराभावात्। न चारोपः सुखनिमित्तम्। न हि चन्दनारोपश्चमत्कारहेतुः किन्तु वस्तुतश्चन्दनसम्बन्ध एव। तथैव सुखमपि नारोप्यमाणं किन्तु वस्तुतो विद्यमानमेव। तार्किकरीत्या श्रीशङ्कुकस्तु—राम एवायम्, अयमेव रामः, इत्यत्र विशेषणान्वित एवकारो विशेषे विशेषणसम्बन्धो नियमितः। उत्तरत्र तु विशेष्यान्वित एवकारो विशेष्येतरस्मिन् विशेष्येतरस्मिन् विशेष्यनिष्ठधर्मसम्बन्धं निवारयति। इति द्विविधापि प्रतीतिः सम्यग् ज्ञानम्। यत्र चोत्तरकालिको बाधस्तत्र मिथ्याबुद्धिः। विरुद्धोभयकोटिका बुद्धिः संशयः। रामसदृशोऽयम् इति साम्यमतिः। एतच्चतुर्विज्ञानविलक्षणा चित्रतुरगोऽयम् इत्याकाराकारिता रसप्रतीतिः। यथोक्तं रसप्रदीपे—'**क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदादिभिः। उत्साहः स्वदते तद्वत् श्रोतॄणामर्जुनादिभिः।**' इत्थमेतया प्रतीत्या नटः पक्षः क्रियते। तेनानुमाप्यानुमापकभावाद् रसानुमिति-

रिति भरतसूत्रार्थः । तथाहि—काव्यानुसन्धानेन, शिक्षासमीक्षानिपुणेन नटेन प्रकाशितैः कार्यकारणरूपैरपि विभावादिशब्दव्यपदेश्यैः रतिरविद्यमानापि सचेतोभिरनुमीयते । यथानुमानप्रकारः—'रामोऽयं सीताविषयकरतिमान्, आलम्बनोद्दीपनानुभावसञ्चारिभावसम्बन्धित्वात् । यथा कुज्झटिकाकुले देशे असत्यपि धूमे धूमत्वेनाऽभिमानाद् धूमलिङ्गस्य वह्नेरनुमितिः । तथा शिक्षाप्रवणेन नटेन, 'ममैवेते विभावादय' इति प्रकाशनात्-अविद्यमानापि रतिरनुमीयमाना सती निजसौन्दर्य्येण चमत्कुर्वाणो रसः । रसस्यानुकर्तृगतमनुमानं चेति श्रीशङ्कुकः । नैतन्मनोरमम् । किञ्चानुमितावपि हेत्वाभासदोषः प्रसज्यते । यथा दर्पणे—'नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम् । आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः ॥' इति ।

सांख्यरीत्या भट्टनायकस्तु—न तावन्नटरामगतो रसः, अन्तगतरसस्यान्यत्राप्रतीतेः, लौकिकज्ञानस्यैव चमत्कारजनकत्वात् । रामादीनामिदानींतनाभावदर्शनात् । तद्विभावाद्यप्रतीतेश्च विभावादिरूपत्वान्न तैरुत्पत्तिस्तस्यावास्तविकत्वाच्च, अभिव्यक्तिस्तु सिद्धस्यैव रसस्य तत्त्वाभावात् । तस्माल्लोके कारणादिरूपैरपि काव्यान्तःपाताल्लब्धविभावादिसंज्ञैः संयोगाद् भोज्यभोजकभावसम्बन्धाद् रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः । अयं भावः—अभिधानन्तरं भाविव्यापारद्वयमपरं भावकत्वं भोजकत्वञ्च, आद्येन साधारणीकरणापरपर्य्यायेण सीतादिविभावानां साधारणीकरणम् । अन्त्येन च रजस्तमोऽपनयता विषयान्तरान्निवर्तयता च रत्यादिः सहृदयहृदयसरसि समावेशितो रसतामादत्त इति भट्टनायकः ।

अत्र व्यापारद्वयकल्पनमधिकं तत्कल्पने मानभाव इति सहृदयहृदयरसाभिव्यक्तिप्रसङ्गाच्च हेयमिदम् । तथाहि—

साहित्यरीत्याऽभिनवगुप्तपादास्त्वित्थम्–उक्तमते एतादृशव्यापारद्वयकल्पने मानाभावः । साक्षात्कारस्य तथाविधकल्पने प्रमाणाभावश्च । लक्षणाप्रयोजनबोधकत्वेन, एकत्राभिधानियन्त्रणेऽपरार्थबोधकया वक्तृबोधव्यादिवैशिष्ट्यसहकारेण तत्तदर्थावगमकतया च व्यञ्जनास्वी-

कारावश्यकता भवन्मतेऽपि। व्यञ्जनास्वीकारे सति भावकत्व-भोजकत्वव्यापारद्वयकल्पनं निरर्थकं व्यञ्जनया वोभयकार्यसिद्धेः। न च व्यञ्जनास्थाने तथाविधभोग एव कश्चिद् व्यापारः कल्पनीय इति वाच्यम्। भावकत्वरूपाधिकव्यापारान्तरकल्पनस्यैव दोषत्वात्। तस्मात्स्थायिनां विभावादिभिः समं संयोगाद् व्यङ्ग्यव्यञ्जकभावरूपात्सम्बन्धाद् विभावादीनामेव वा परस्परं संयोगान्मिलनाद् रसस्य निष्पत्तिरभि व्यक्तिरिति सूत्रार्थः। (इदमेव मतं मम्मटसम्मतं सिद्धान्तभूतञ्च)। लोके नायिकादिभिरालम्बनकारणैः स्थायिनाऽनुमाने काव्ये तैरेव कारणत्वादिपरिहारेण विभावनत्व-रूपव्यापारात् साधारण्येन प्रतीतैर्विभावादिभिरभिव्यक्तः, प्राक्तनीवासनावासितः नियतप्रमातृगतोऽपि भावनाजनितसाधारण्येन विगलितनियतदुष्यन्तत्वादिविशेषज्ञानेन उत्पन्नवेद्यान्तरशून्यत्वेन तेनैव प्रमात्रा स्वाकार इवाभिन्नोऽपि गोचरीकृतो विभावादिसमूहालम्बनात्मकः प्रपानकरसन्यायेन चर्व्यमाणः, आस्वादनचर्वणामयः, लोकोत्तराह्लादकः, सामाजिकैरास्वाद्यमाना रत्यादिरेव। अत्रायमाशयो—यद् रतिकारणादीनामनुभवादसकृदनुमिता रतिः संस्काररूपेण सहृदयहृदयमधिरोहति। अथ कियता कालेन सुनिपुणमनुष्ठितयोः रामादिव्यक्तिविशेषसम्बन्धिरतिकारणविभावादिप्रतिपादकयोरपि काव्यनाट्ययोः पूर्वोक्तभावकत्वव्यापारेण रामसीतादिविशेषांशपरिहारेण रतिकारणसाधारणकामिनीत्वादिना प्रतीतैर्विभावादिभिः सहृदयावस्थिता रतिर्व्यञ्जनया अभिव्यक्ता सामाजिकानाम् आस्वाद्यतामायातीति एतादृशास्वाद एव रसनिष्पत्तिरिति। पूर्वमते—असत्या अपि रतेरास्वादः, अत्र तु वासनया स्थिताया एवेत्यनयोर्भेदः। अतो रसस्याऽलौकिक एव व्यापारः। इति शम्।

पण्डितराजजगन्नाथमते त्वेतावान् भेदो यद्भग्नावरणस्य रत्युपहितस्यात्मचैतन्यस्यानुभवो रसः। अत्र मते आनन्दमयात्मचैतन्यस्यानुभवे प्राधान्यं रत्यादेर्गौणता। पूर्वोक्तालङ्कारिकमते चानुभावे रत्यादिप्राधान्यं चैतन्यस्य गौणत्वमिति सारः।

अथ रसस्यालौकिकत्वम्। लौकिकं वस्तुमात्रम्, कारकज्ञापक-

सम्मितरसस्तु न कार्यः नापि ज्ञाप्यः । विभावादिभिः सह विनाशदर्शनात् । अन्त्ये विद्यमानस्य प्रकाश्यत्वाच्च । नैतादृशं किञ्चिदस्तीति चेत्—अलौकिकत्वमस्य । अस्तित्वन्तु चर्वणानिष्पत्या, अत औपचारिकी कार्यताऽपि रसे लौकिकं प्रत्यक्षादि यच्च प्रत्यक्षादिप्रमाणानपेक्षमिति योगिज्ञानं बाह्यज्ञानशून्यम् । परिपक्वयोगिज्ञानं तद्विलक्षणमिति । ज्ञाप्योऽपि विभावादिसम्बलितत्वेन निर्विकल्पं वक्तुं शक्यम्, नापि च सविकल्पकम् । चर्व्यमाणत्वेनाऽलौकिकाऽऽनन्दमयत्वात् । अत उभयाभावस्वरूपम् । आनन्दमयत्वान्निर्विकल्पकं विभावादिसम्बलितत्वेन तु सविकल्पकम् । इत्युभयात्मकता ततोऽलौकिकता—अतोऽयं ब्रह्मास्वादसहोदरो रसः—न ज्ञाप्यः, न कार्यः, न नित्यः, न भावी, वर्तमानः, न निर्विकल्पकवेद्यः, न सविकल्पकज्ञानवेद्यः, न प्रत्यक्षः, न परोक्षः, नोत्पाद्यः, न वाच्यः, किन्त्वलौकिकः स्वप्रकाशः, अखण्डश्चेति ध्येयम् । मिलितैर्विभावा[1]दिभिरुत्पद्यते रस इत्युच्यते । एकैकेनोत्पत्तौ तु रसो निरायि । एवं दण्डचक्रादिन्यायेन सम्भूयैव कारणत्वं न तु तृणारणिमणिन्यायेन प्रत्येकमिति दिक् । विस्तारस्तु काव्यप्रकाशादौ द्रष्टव्यः । एवं नानाजातीयाभिः शेमुषीभिः नानारूपतयाऽवसितोऽपि मनीषिभिः परमाह्लादाविनाभावितया प्रतीयमानो रसः परमरमणीय इत्यत्र न विवाद-इति शम् ।

---

१. विभावादीनां त्रयाणां कथं रसोद्बोधे कारणत्वम्, अत आह—कार्यकारणसञ्चारिरूपा अपि हि लोकतः । रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ।। तेषां मिलितैरेव रसस्तत्कथं तेषामेकस्य द्वयोर्वा सद्भावेऽपि स स्यात्—सद्भावश्चेद् विभावादेर्द्वयोरेकस्य वा भवेत् । झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते । यत्र खलु दुराग्रहेणान्याक्षेपस्तत्र यथा—दीर्घाक्षं शरदिन्दुकान्तिवदनम् ।

न च कथं न नैयायिकमीमांसकानां तादृशसुखाप्तिरिति वाच्यम् ? रत्यादिवासानां विना आस्वादानुत्पादात् । अत एवोक्तम्—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः ।।

ननु करुणरसादिषु स्थायिनः शोकादेर्दुःखजनकतया कथं सहृदयाऽऽह्लादकत्वम् । प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैवौचित्यात् अत उच्यते—'**करुणादावपि रसे जायते यत्परं सुखम् । सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥**' अयमत्र विस्तारः, न कोऽपि सचेतनो दुःखाय प्रवर्तते भवति च तत्र सातिशयं सुखमेव । न च सत्यस्य शोकादेर्दुःखजनकत्वं क्लृप्तं न कल्पितस्येति नायकनामेव दुःखं न सहृदयस्येति वाच्यम् । रज्जुसर्पादेर्भयकम्पाद्यनुत्पादकतापत्तेः सहृदये रतेरपि कल्पितत्वेन सुखानुपपत्तेश्चेति चेत्—न; तत्रेष्टस्याधिक्यादनिष्टस्य च न्यूनत्वात्प्रवृत्तिः । अत आह विश्वनाथः–'**किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः**' अथवा शृङ्गारकाव्येभ्य इव करुणप्रधान काव्येभ्योऽपि कार्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तरकाव्यस्यापि विलक्षणप्रयोजकत्वमिव दुःख प्रतिबन्धकत्वमपि कल्पनीयम् । यदि करुणरसप्रधानकाव्यानां दुःखहेतुता स्यात्तदा रामायणादौ दुःखकारणत्वाल्लोकस्य प्रवृत्तिरेव न स्यात्, भवति च प्रवृत्तिः । अतो न दुःखहेतुता । अयं हि लोकत्तरस्य काव्यव्यापारस्य महिमा यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति । विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात् । अतस्तत्राऽश्रुपातादयोऽपि तत्तदानन्दानुभ वाज्जायन्ते न पुनर्दुःखात् अतः पूर्वोक्तं दर्पणकारप्रमाणं (करुणादावपि रसे०) सर्वथा सङ्गच्छते। इति ।

## स्थायिभावभेदनिरूपणम्

**रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च**' । अष्टौ स्थायिभावाः । ते च रतिः, हासः, शोकः, क्रोधः, उत्साहः, भयं, जुगुप्सा, विस्मयश्चेति । अमीषामाप्रबन्धं स्थिरत्वात्स्थायित्वम् । सम्प्रति रसभेदाः कथ्यन्ते—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः ॥**'

इति भरतमुनेर्वचनम् । मम्मटपण्डितराजयोरप्येतदनुमतम् । तत्र

शृङ्गारो द्विविधः। सम्भोगो विप्रलम्भश्च। हास्योऽपि द्विविधः। आत्मसंस्थः परसंस्थश्च। द्विविधोऽप्ययमुत्तममध्यमाधमभेदैस्त्रिविधः। स्मितहसितविहसितोपसितापहसितातिहसितैः सोऽपि षड्विधः। तत्र स्मितं हसितञ्चोत्तमानाम्। विहसितमुपहसितञ्च मध्यमानाम्। अपहसितमतिहसितञ्च नीचानाम्। वीरश्चतुर्धा। दानदयाधर्मयुद्धभेदात्। षडितरेऽद्वितीयाः। तत्र काव्ये कमपि रसं परिपोष्टुकामेन कविना तद्विरुद्धरसानां निबन्धनं न कार्यम्। तथा सति तदभिव्यक्तौ विरुद्धः प्रकृतं बाधेत। सुन्दोपसुन्दन्यायेन चोभयोरुपहतिः स्यात्। यदि तु विरुद्धयोरपि रसयोरेकत्र समावेश इष्यते तदा विरोधं परिहृत्य विधेयः। यथा—नायकगतत्वेन वीररसे वर्णनीये प्रतिनायके भयानकस्य। अथ कथमेत एव रसाः। भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य भागवतादिपुराणश्रवणसमये भगवद्भक्तेरनुभूयमानस्य भक्तिरसस्य दुरपह्नवत्वात् भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः। न चासौ शान्तरसेऽन्तर्भावमर्हति। अनुरागस्य वैराग्यविरुद्धत्वात्। अत उच्यते भक्तेर्देवादिविषयकरतित्वे भावान्तर्गततया रसत्वानुपपत्तेः। तथा चोक्तम्—'**रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः। भावः प्रोक्तस्तदाभासा अनौचित्यप्रवर्तिताः॥**' तस्मात्पुत्रादिविषयो वत्सलोऽपि न रस इति निर्विवादम्। तदभ्युपगमे तु रसानां नवत्वगणनाविधायको मुनिवचननियन्त्रणाभङ्गः स्यात्। तस्माद् यथाशास्त्रमेव ज्याय इति नवसंख्यका एव रसा नान्यो वत्सलरसस्तद्भिन्न इति।[1]

---

१. शृङ्गारः—शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः। उत्तमप्रकृतिप्रायो रस शृङ्गार इष्यते। यथा—शून्यं वासं गृहं०। हास्य विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत्। हास्यो हासः स्थायिभावः श्वेतदैवतः। यथा—'गुरोर्गिर०' 'नपुंसक०'। इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्। यथा—'विपिने क्व जटानि०'। रौद्रः क्रोधस्थायिभावः रक्तो रुद्राधिदैवतः। यथा—'गर्ज गर्ज क्षणं मूढ०' 'कृतमनु०' वा उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः महेन्द्रदैवतो हेमवर्णोऽयं समुदीरितः, यथा—'भो लङ्केश्वर०'। भयान

## विरोधिरसाः

रसानामेषां परस्परविरोधमाह विश्वनाथ इत्थम्—आद्यः करुण-वीभत्सरौद्रवीरभयानकैः। भयानकेन करुणेनापि हास्यो विरोधभाक्। करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः। रौद्रस्तु हास्यशृङ्गारभया-नकरसैरपि। भयानकेन शान्तेन तथा वीररसः स्मृतः। शृङ्गारवीर॰ रौद्राख्यहास्यशान्तैर्भयानकः। शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता॥ अथ रसाभास-भावा-भासौ—अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः। भावशान्त्यादयः—भावस्य शान्तावुदये सन्धिमिश्रितयोः क्रमात्। भावस्य शान्तिरुदयः सन्धिः शबलता मता। सञ्चारिणः प्रधानानि देवादिविषया रतिरिति शम्।

## सामान्यतो व्यञ्जनास्थापनसङ्कलनम्

केयं व्यङ्ग्यार्थबोधनसाधनीभूताऽभिनवा नवीनैरङ्गीकृता व्यञ्जना नाम वृत्तिः ? तत्रोच्यते—

**'वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम्।**
**अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम्॥'**

यथा 'गङ्गायां घोषः' इति वाक्ये शैत्यपावनत्वादिप्रतीतिर्व्यञ्जन-यैव। तत्र सङ्केताभावान्नाभिधा, अभिधा हि 'गङ्गाप्रवाहे घोषः' इत्येव-मर्थं प्रबोध्य विरता भवति 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति न्यायात्। संसर्गबोधमात्रे क्षीणा च तात्पर्याख्या वृत्तिरपि नात्रो-पयोगिनी, न चात्र लक्षणमुख्यार्थबाधाद्यभावात्। लक्ष्यार्थबोधानन्तरं

---

भयस्थायिभावः कालाधिदैवतः, तथा—'नष्टं वर्षवरै॰'। जुगुप्सास्थायि-भावस्तु वीभत्स कथ्यते रसो नीलवर्णो महाकालदैवतः, यथा—'उत्कृत्योत्कृत्य कृत्ति॰' अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः, यथा—'चित्रं महानेष॰'। शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः। यथा—'अहौ वा हारे वा॰', 'न तत्र दुःखं न सुखं न॰'। अथ प्रवासः। प्रवासो भिन्नदेशत्वं कार्याच्छापाच्च सम्भ्रमात्।

व्यङ्ग्यार्थबोधनेऽसामर्थ्यात् । शैत्यादिप्रतीते लक्ष्यत्वे प्रयोजनान्तर-कल्पनानवस्थापातात् । तस्मादत्र शैत्यपावनत्वप्रतीतिर्व्यञ्जनयैव । अयं भावः—तत्रायं विशेषोऽपि ध्येयः—अभिधायां वाच्यार्थबोधनानन्तरं विरतायां, लक्ष्यार्थबोधनेन लक्षणायाञ्च विश्रान्तायां, तात्पर्याख्यायाञ्चान्वयबोधमात्रेण विरतायां न तासां वस्त्वलङ्काररसादिबोधने योग्यत्वम् । न पुनः रसादिः सङ्केतलभ्यः काव्यात्मभूतस्य स्वप्रकाशानन्दरूपस्य रसस्यायं रसः इति स्वशब्देनाप्यभिधानं न सम्भवति । तथात्वे दोषापातात् । विभावाद्यभिधानेनैव तत्सिद्धिरित्यपि न, तस्य विभावाद्यानन्तरभावित्वात् । बुद्धिर्यथा एकमर्थं विषयीकृत्य नापरं विषयीकर्त्तुं शक्नोति, ज्ञानद्वयस्य यौगपद्यानङ्गीकारात् तथा—एकः शब्द एकमर्थं बोधयितुमेव क्षमः 'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'-त्युनुशासनबलात् । इति पुनरर्थप्रत्यायनशक्त्यभावाच्च न रसादि-व्यङ्ग्यबोधने तासां योग्यता ।

अपि च—अभिधा लक्षणा च प्रमाणान्तरसिद्धमेव वस्तु बोधयत इति नियमात् रसादेस्तु बोधात्पूर्वं प्रमाणान्तरस्यासिद्धतया प्रागविद्यमानत्वात्, न ताभ्यां रसादिबोधः । गङ्गायां घोष इत्यादौ लक्षणास्थलेऽपि-उपात्तशब्दार्थानामन्वयबोधो भवितुमिच्छन्नेवानुपपत्त्या बध्यते, ततो लक्षणायाः प्रवेशः । इह तु प्रतीतिकाले-एव जायमानस्य अनुरणनात्मकव्यापारस्य पूर्वं प्रमाणासिद्धत्वाद्वा मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणा । किन्तु व्यञ्जनैवैका गतिरिति । सर्वमुक्तं पूर्वमेव ।

ननु मा भवतु रसादौ लक्षणा, वस्तुनि व्यङ्ग्ये तु सा न हस्तपिहितेत्युच्यते 'त्वामस्मि वच्मि' इत्यत्र वचनादि उपदेशादिरूपेऽर्थान्तरसङ्क्रमितवाच्य, 'उपकृतं बहु' इत्यत्राऽपकारातिशये व्यङ्ग्ये वाच्यमत्यन्ततिरस्कृतमिति लक्षणामूले तत्रोभयत्र वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न सम्भवति । अयम्भावः-रूढ्यभावेन प्रयोजनवत्यां लक्षणायां प्रयोजनस्य व्यङ्ग्यत्वमेव न लक्ष्यत्वं तस्माद् व्यञ्जनैवेति । अभिधामूलेऽपि **'उल्लास्य कालकरवाल'** इत्यादौ शब्दशक्तेर्नियन्त्रणेनानभि-

धेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च व्यङ्ग्यत्वमिति सर्वसम्मतम् ।

## अभिहितान्वयवादे

इहानन्त्याद् व्यभिचाराच्च वाक्यस्य वाक्यार्थ इव विशेषरूपे पदार्थे पदस्य सङ्केतं कर्त्तुं न पार्यते इति सामान्य एव सङ्केतः। आकांक्षासन्निधियोग्यतावशात् सामान्यानामभिहितानां सतामन्वय इति पदार्थानां वैशिष्ट्यम् । एवञ्चापदार्थोऽपि वाक्यार्थस्तात्पर्यशक्त्या प्रतिपाद्यते। अत्र पक्षे पूर्वमभिधा, ततोऽन्वयबोधे लक्षणा, ततस्तृतीयकक्षायां व्यञ्जनेति । यतः पदेभ्यः, पूर्वं पदार्थस्मृतिः, अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः, ततो व्यङ्ग्यप्रतीतिस्तृतीयकक्षायां तत्र कुतोऽभिधायाः प्रसरणम् ? **'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव'** इति न्यायात्तदनपेक्षणत्वान्नाभिधेयो व्यङ्ग्यः।

## अन्विताभिधानवादे

ये त्वन्विताभिधानवादिन आहुः **'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति'** इत्यादिकम् । तत्रापि नाभिधेयो व्यङ्ग्य इति निरूप्यते— अयमस्ति तेषां सिद्धान्तो यद् देवदत्त गामानयेत्याद्युत्तमवृद्धवाक्यश्रवणान्मध्यमवृद्धो विशिष्टं व्यापारं करोति, इति दृष्ट्वा व्युत्पाद्यमानो निर्विभागेऽर्थे निर्विभागं वाक्यं वाचकं जानाति । ततो यज्ञदत्त गां नय, अश्वमानयेत्यादिवाक्यान्तरप्रयोगे सति अन्वयव्यतिरेकाभ्यां नियतस्य नियतार्थमवस्यतीति सामान्यावच्छादिते विशिष्ट एव पदार्थे पदानां संकेत इत्यन्वितानामेवाभिधानं विशिष्टानां पदार्थता—अत्र पक्षेऽभिधायाः पुर आदौ लक्षणा विशिष्टस्यैव पदार्थत्वात् । अतोऽनन्तरभाविनि व्यङ्ग्यबोधे कथमभिधेति ।

वादिद्वयमते द्वयम्—पदापेक्षयाऽभिहितान्वयः, वाक्यापेक्षयात्वन्विताभिधानम् । इति द्वयपक्षे द्वयम् । अभिधायाः पश्चात्पुरस्ताच्च सा ।

## अथ नैमित्तिकः शब्दः

ननु व्यङ्ग्यप्रतीतिर्नैमित्तिकी । निमित्तान्तरानुपलब्धेः शब्द एव

निमित्तम् । तच्च बोध्यबोधकत्वरूपं निमित्तत्वं वृत्तिं बिना न सम्भवति-इत्यभिधैव वृत्तिः **'नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते'** इति न्यायात् । तत् किं व्यञ्जनया ? तत्रोच्यते भवतु नाम शब्दो निमित्तः परं स कारकनिमित्तः आहोस्वित् ज्ञापकनिमित्तः—इति पृच्छ्यते, निमित्तस्य द्विविधत्वात् । इति विविच्योच्यते न भवति कारकनिमित्तत्वं तस्य शब्दस्य प्रकाशरूपत्वात् । ज्ञापकत्वञ्चेत्तत्स्वीकारे नास्माकमपि वैमत्यं तस्य व्यञ्जनाऽस्वीकारेऽसद्भावात् व्यापारस्याधिककल्पनत्वाच्च । शब्दस्यार्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतं वा । यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणे व्यापारौ, तथा—इहापि कोऽपि व्यापारोऽवश्यमङ्गीकार्यः । अन्यथा हि शब्दस्य निमित्तत्वानिश्चयेन नैमित्तिको व्यङ्ग्यार्थ इत्येव भवदभिमतोऽपि न सिद्धयति । यदि तु व्यापारं विनापि शब्दस्य निमित्तत्वं स्यात्तदा अभिधालक्षणे अपि दत्ताञ्जली स्यातामित्यस्माभिरुच्यते—शब्दो नैमित्तिको न व्यङ्ग्यः ।

## तत्र वाच्योऽपि नेति

ननु शब्दश्रवणानन्तरं यावन्तोऽर्थाः प्रतीयन्ते तावत्स्वेव शब्दस्याभिधाव्यापार एव स्यादिति भट्टमतोपजीविनां भट्टलोल्लटादीनामभिमतं मतमुत्थाप्य दूषयति-**'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापार इति'** यथा बलवता प्रेरित एक एवेषुरेकेनैव वेगाख्यापारेण रिपोर्वर्मचर्ममर्मच्छेदं करोति प्राणहरणञ्च विधत्ते तथा सुकविप्रयुक्त एक एव शब्द एकेनैवाऽभिधाख्यव्यापारेण पदार्थोपस्थितिं सम्भावयन् बोधञ्च कुर्वन् व्यङ्ग्यप्रतीतिमातनोति । अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव । तत्किमस्या अभिनवाया व्यञ्जनावृत्तेः स्वीकारेणेति । तथाहि **'यत्परः शब्दः स शब्दार्थः'** इति न्यायादवगम्यते यदर्थे यस्य शब्दस्य तात्पर्यं स शब्दार्थस्तस्मात् **'निःशेषच्युतचन्दन**मित्यादौ त्वं रन्तुमेव गतासि न वापीं स्नातुं गतेति व्यङ्ग्यम्—तन्नोचितम् उक्तन्यायेन विधेर्वाच्यत्वात् । अतस्त्वं रन्तुं गतासीति तात्पर्यविषयतया विधिरूपवाच्य एव, न पुनर्निषेधः, व्यङ्ग्य इत्यर्थः । इति यदुक्तं तन्न विचारसहम् ।

अत उक्तं—तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचो युक्तेर्देवानां प्रियाः—मूर्खा इत्यर्थः। तत्कथमिति स्वमतसाधनप्रकारं प्रदर्श्य वादिनो मतं खण्डयति। तथाहि—'**भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते**' इति कारकपदार्था 'गामानय' इत्यादौ क्रियापदार्थेन 'आनय' इत्यनेन अन्वीयमानाः प्रधानक्रियायाः (आनयनरूपायाः) निर्वर्तकस्वक्रियायाः—(चलनरूपायाः) अभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति, ततश्चादग्धदहनन्यायेन यावदप्राप्तं भवति तावदेव विधीयते यथा ऋत्विक् प्रचरणे प्रमाणान्तरैस्तत्सिद्धेः '**लोहितोष्णीषा ऋत्विजः प्रचरन्ति**' इत्यत्र लोहितोष्णीषमात्रं विधेयम्। एवमेव हवनस्य अन्यतः '**अग्निहोत्रं जुहोति**' इत्यादौ दध्यादेः करणत्वमात्रं विधेयम्। एवमेव क्वचिदेकविधिः क्वचिद् द्विविधिः क्वचित्त्रिविधिरपि भवति यथा '**रक्तं पटं वय**' इत्यादौ—इत्थञ्च यदेव विधेयं तत्रैव तात्पर्यम्। '**इत्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे। अन्यथा 'पूर्वो धावति' इत्यादावपि तात्पर्यं स्यात्। यत्तु विषं भक्षय मा चास्य गृहे भुङ्क्थाः**' अत्रापि चकारेण तद्योग एवेति न शङ्क्यम्। तस्मान्निःशेषच्युतचन्दनमित्यादौ तु वक्त्रभिप्रेतो विध्यर्थोऽपि न केनापि शब्देनोपात्त इति कथमभिधैवोक्तन्यायेन व्यापारः स्यात्। 'अनन्यलभ्यः शब्दार्थः' इति न्यायेन अनलभ्यार्थे—एवाऽभिधावतरति न त्वन्यलभ्येऽपि, प्रकृते तु विधिरूपार्थो न प्रमाणान्तरगम्यः शब्दगम्यत्वात्। शब्दस्य च प्रकृतेऽभिधाव्यापारो वाज्यार्थबोधनोपक्षीणस्तस्माद् भवितव्यं केनापि व्यापारेण येन तस्य बोधः स्यात् स च प्रकृतेर्व्यञ्जनैवेति परमार्थः।

'**कुरु रुचिम्**'—रुचिं कुरु इत्युक्तौ स्त्रीगुह्याङ्गवाचकचिङ्कुपदतुल्येन चिङ्क्वित्यनेन व्यञ्जनया स्त्रीगुह्याङ्गोपस्थित्याऽश्लीलत्वदोष इति, नैवमुच्यते, तत्र 'अन्वित एवार्थोऽभिधेय' इत्यन्विताभिधानमते व्यञ्जनाया अस्वीकारे न सम्भवति। तादृशार्थस्य केनाप्यनन्वितत्वेनानभिधेयत्वात्।

### वाच्यार्थव्यङ्ग्यार्थयोर्भेदसारः

किञ्च पदार्थमात्रबोधरसिकैर्वैयाकरणैरन्यैरपि वाच्यार्थो ज्ञेयः

व्यङ्ग्यार्थस्तु सहृदयैकसंवेद्यः, इति बोद्धृभेदाच्च व्यङ्ग्यो नाभिधेयः। एकस्मिन् वाच्ये ज्ञातृप्रभृतिभेदाद् बहुव्यङ्ग्यार्थप्रतीतिसम्भवेन यथा **'गतोऽस्तमर्क' इत्यादौ वाच्योऽर्थस्तु क्वचिदन्यथा न भवति व्यङ्ग्यार्थस्तु नानारूप प्रकाशते'** तथा चैवमेव क्वचिन्निषेधरूपे वाच्ये विधिव्यङ्ग्यसम्भवः, क्वचिच्च विधिरूपे निषेधरूप इति स्वरूपभेददर्शनाच्च। तथा वाक्यार्थबोधे शब्दोचारणमात्रेणैवार्थप्रतीतेः, शब्दानामेव निमित्तत्वम् व्यङ्ग्यार्थस्तु तथाविधप्रतिभानैर्मल्यादेरिति। वाक्यस्य प्रथमं प्रतीतिः, व्यङ्ग्यस्य वाक्यार्थबोधनान्तरमिति पौर्वापर्यभावभेदेन कालभेदाच्च। वाक्यस्य शब्दमात्राश्रयत्वम्, व्यङ्ग्यस्य तु शब्दप्रकृतिप्रत्ययोपसर्गतदर्थवर्णसंघटनाश्रयत्वेनाश्रयभेदात्। उभयोरेव पृथक्-पृथक्-विषयः, विषयभेदाद् भिन्नोऽयं व्यङ्ग्यार्थो वाच्यार्थात्। अथ लक्षणाव्यञ्जनयोरपि भेदसार एवं नेदं मन्तव्यं यल्लक्षणायाः पुच्छभूतैव व्यञ्जना किन्तु अभिधाया आधारेऽपि तत्सत्त्वात् न च केवलमभिधा लक्षणात्मकैवैषा, अर्थशून्यवर्णेष्वपि तत्सद्भाव इति नापि च तदनुगतमेव किन्तु अशब्दरूपेषु कटाक्षावलोकनादिष्वपि व्यञ्जना भवति तस्माद् भिन्ना विलक्षणैवैषा व्यञ्जनेति संकेतमात्रमिह अधिकन्तु सहृदयैः स्वयमेवावसेयम्।

## वेदान्तमते

अखण्डवाक्यस्य वाक्यार्थे शक्तिस्तथा च व्यङ्ग्येऽपि वाक्यगम्ये वाक्यस्य च शक्तिरिति वेदान्तिमतम। तत्र तेषामयमाशयो यत्-क्रिया कारकभावो धर्मधर्मिभावमपुरस्कृत्य न सम्भवति, धर्मधर्मिभावश्च संसारस्य मिथ्यात्वेन न सम्भवति नापि च ब्रह्मणो निर्धर्मकत्वात्। अतः पदपदार्थविभागमन्तरेणैव **'सत्यं ज्ञानमनन्तं ब्रह्म'** इत्यादि महावाक्यमखण्डमेवाखण्डं ब्रह्म बोधयतीति वैदान्तिकमतानुसारेण व्यङ्ग्येऽपि वाक्यगम्ये वाक्यस्य शक्तिरेवेति चेन्न, तथाहि -सांसारिकदशायां वैदान्तिकैरपि क्रियाकारकभावस्वीकारेण नैवं सम्भवतीति तन्मतेऽपि **'निःशेषच्युतचन्दन'**मित्यादौ तदन्तिकं गतासीति विध्यादिव्यङ्ग्य

एवेति। केचित्तु अखण्डबुद्धिर्महावाक्यबुद्धिस्तया निर्ग्राह्यो महावाक्यार्थः स एव वाच्य इत्याहुः, तस्माद् व्यङ्ग्यो वाच्य एवेति यदुक्तं तदपि न मनोरमम्। अविद्यादशायां तु व्यवहारे भट्टनायकाङ्गीकारादावापोद्वापाभ्यामत्रापि पदपदार्थविभागस्याङ्गीकारात् अन्यथा व्युत्पन्नाव्युत्पन्नव्यवहारोऽपि न स्यात्तस्मादुक्तोदाहरणे विध्यादिर्व्यङ्ग्य एवोभयतः सिद्धम्।

## नानुमानाद् रसादिव्यङ्ग्यप्रतीतिः

नाट्ये रामत्वेनाहार्य्यज्ञानविषये नटे, काव्ये तु रामे एव विभावादिभिः रत्याद्यनुमानम्। ततस्तदनमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यासत्त्या साक्षात्कृतो 'रामादिरत्यादिः रसः' इति रसादेरनुमानप्रमाणमूलकासाक्षात्काररलभ्यत्वादेव अङ्गीक्रियताम्। तदपि न यथा 'पर्वतो वह्निमान् धूमात्' इत्यत्र वह्निव्याप्यधूमवान् पर्वत इति प्रतीतिस्तथा **'शून्यं वासगृहम्'** इत्यादि यत्काव्यं तत् श्रृङ्गारादिरसवत् तत्तद्विभावादिमत्त्वात् इत्यनुमितौ श्रृङ्गाररसव्याप्यविभावादिमत् काव्यमिति परामर्शस्तु यद्यपि सुग्रह एव तथापि एवंविधा परामर्शरूपा प्रतीतिरस्माकमास्वाद्यत्वेन नाभिमता, हेतूनामाभासत्वात्। अथवा ( विभावानुभावाश्च तथा सञ्चारिणः क्रमात्। पक्षाः सपक्षा कथिता विपक्षा रसबोधने ) इत्येवं रसगङ्गाधरकारस्य सिद्धान्तमनुश्रित्य व्यक्तिविवेककारो महिमभट्टाचार्यो यदुक्तवान् तत्रासौ पृच्छ्यते किं शब्दाभिनयसमर्पितविभावादिप्रत्यनानुमितरामादिगतरागादिज्ञानमेव रसत्वेन तेऽभिमतः, आहोस्वित् तद्भावनया भावुकैर्भाव्यमानः स्वप्रकाशानन्दो वा। तत्र नाद्ये विवादः किन्तु रससंज्ञया तन्नोच्यतेऽस्माभिरित्येवं विशेषः। द्वितीयस्तु व्याप्तिग्रहणाऽभावाद् हेतोराभासतयाऽसिद्ध एवेति। एवं नापि तत्र संस्कारजन्यत्वाद्रसादिबुद्धेरपि स्मृतित्वम्। प्रत्यभिज्ञानरूपायां सोऽयमित्याकारकप्रतीतौ साध्यं विना विद्यमानतया संस्कारजन्यज्ञानत्वरूपस्य हेतोर्दुष्टत्वमेवेति। तदुक्तञ्च–

**नानुमानं रसादीनां व्यङ्ग्यानां बोधने क्षमम्।**
**आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः'॥ इति दिक्।**

## त्रिरूप-लिङ्गानुमाने

भूयोऽपि महिमभट्टो वक्ति-वस्तुव्यङ्ग्यप्रतीतिरपि-अनुमानेनैव भवति, तदर्थं व्यञ्जनास्वीकरणन्नोचितम्। यतो हि—**'वाच्यान्न कोऽप्यर्थः सम्बन्धं विहाय प्रतीयते'** इति नियमः। अतोऽत्र व्याप्ति-सम्बन्धोऽस्ति। तेन व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च सपक्षसत्त्व-विपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद् व्यङ्ग्यव्यञ्जकभावे पर्यवस्यति, यथा—"भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन। गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन"॥ अत्र पुष्पावचयार्थं स्वसंकेतस्थानभूते गोदानदीकूलनिकुञ्जे यान्तमभि-सारविघ्नकारिणं कञ्चन् धार्मिकं भीषयितुं कस्याश्चित्कुलटायाः स्व-विनयं सूचयन्त्या उक्तिरियम्। तदत्र निकुञ्जवासिसिंहकृतया श्वनि-वृत्त्या गृहे भ्रमणविधिर्वाच्यः स एव निकुञ्जभ्रमणायोग्यतानुमित्यै प्रभवति। यद्यद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्। निकुञ्जे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धौ पर्यवसानाद् भ्रमणस्य निषेधमनुमापयति यथा तत्र—**'इदं गोदावरीनिकुञ्जं श्वभीरुभ्रमणा-योग्यं सिंहवत्त्वात्' यन्नैवं तन्नैवं यथा गृहम्** इति। अत्र निकुञ्जं पक्षः भ्रमणायोग्यत्वं साध्यः, सिंहोपलब्धिः हेतुः, महावनम् सपक्षः। इत्थमुक्तानुमाने भ्रमणायोग्यत्वानुमित्यै सिंहोपलब्धिर्हेतुर्दत्तः। अनेन गोदावरीतीरं भीरुभ्रमणायोग्यत्वमनुमीयते—इति चेन्न? हेतोर्व्यभिचा-रित्वात्। यद् यद् भीरुभ्रमणं तत्तद् भयकारणनिवृत्त्युपलब्धिपूर्वक-मिति व्यतिरेकव्याप्तेरेवासिद्धत्वात्। यतो हि-भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि। अथ च गोदावरीतीरे सिंहोपलब्धिः प्रत्यक्षादनुमानाद् वा न निश्चितः। अपितु कुलटाया वचनात्। नहि कुलटावचनं प्रामाण्यं भवति, अर्थेन अप्रतिबन्धादिति हेतोर्दुष्टत्वम्, विरुद्धत्वश्चात्र तत्कथ-मेवं विधेनानुमानेन साध्यस्य व्यङ्ग्यस्य तेऽभिमता सिद्धिरिति समा-धानम्। न च **यथा 'निःशेषच्युतचन्दनम्'** इत्यादौ गमकतया चन्दन-

च्यवनादिभिः व्यञ्जना स्वीक्रियते, तथाऽस्माभिरपि अत्र क्रियते—इति वाच्यम्। श्लोकेऽधमपदस्य साहाय्येन तथादर्शनात्। न च तथाऽनुमानेऽस्ति, तत्र तु 'व्यप्तिपक्षतादयो लिङ्गधर्मास्तेषां सद्भाव एवानुमानस्य गतिः' अतो वयं स्वतन्त्रा इति स्वकार्यं कर्तुं तदापि सफला एवेति। अयमाशयः—एवं 'दृष्टिं हे प्रतिवेशिनि' इत्यत्र परकामुकोपभोगस्य लिङ्गिनः तनूल्लिखनादिकं लिङ्गम्। यथा इयं परकामुकोपभोगवती एकाकितया स्रोतोगमने सति तनूल्लिखनवत्त्वात् कुलटान्तरवत्–इत्यत्र। अयमपि हेतुर्व्यभिचारी, यतो हि यत्र यत्र एकाकितया स्रोतोगमने सति तनूल्लिखनं तत्र तत्र परकामुकोपभोग इति व्याप्तिर्न सम्भवति, स्वकान्तस्नेहेन गमनस्य तनूल्लिखनस्य च सम्भवात्। इति महिमभट्टस्य मतखण्डनं तत्रापि च ध्वननमेवेति सिद्धम्।

## व्यञ्जनापार्थक्यसारः

तथा हि ननु 'यत्परः शब्दः स शब्दार्थः' इति व्यङ्ग्याभिमतोऽपि तात्पर्यात्कथं न वाच्यः। इह सर्वाण्येव कारकाणि कारकत्वात् सव्यापाराणीति साध्यायमानान्यतो भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्येत—इति अदग्धदहनन्यायेन यावद् विहितं तावद् विधीयते इति क्वचित्कारकपदार्थोऽपि विषयो भवति यथा दध्ना जुहोति, पयसा जुहोति्-इति। एवं हि पूर्वो धावति—इत्यपरार्थेऽपि तात्पर्यं स्यात्। अन्वितः पदार्थोऽभिहितान्वये, अन्वितमात्रं त्वन्विताभिधाने तत्रैव सङ्केतोपपत्तेः। अन्वितविशेषस्तूभयमतेऽप्यवाच्य एव। एवं च वाच्यत्वे का वार्ता वाच्यविपरीतात्मनो व्यङ्ग्यस्य। न तु व्यङ्ग्यमनुमेयमिति शक्यं वक्तुं, नहि वाच्यव्यङ्ग्ययोः प्रतिबन्धे किञ्चित्प्रमाणम् क्रमते। प्रकरणादिसामग्रीमन्तरेण हि न व्यङ्ग्यम्। न च सा प्रमाणगोचरा। व्यङ्ग्यवाचिनान्त्वदोषः। एवं भूतायां प्रमाणैरप्रतिपन्नायां हि सामग्र्यामुपपत्तिमनपेक्ष्यापि समुदीयमानाप्रतीतिः केन निह्नोतुं शक्यत–इति सिद्धमभिधातात्पर्यलक्षणाव्यापारातिरिक्तं ध्वननम्। इति संक्षेपतो व्यञ्जनाव्यापारस्यातिरिक्तत्वम्, सर्वतन्त्रस्वतन्त्रत्वञ्च वेति शम्।

## गुणालङ्कारभेदनिरूपणम्

तथाहि—केचन वदन्ति नहि तावद् गुणालङ्कारयोः कोऽपि भेदः। काव्योत्कर्षस्य समानैकत्वात्। अयं भावः—यथा काव्यशोभाधायका अलङ्कारास्तथैव गुणा अपीति यदुक्तं तत्सर्वमसम्यक् इति तन्मतं निराकर्तुं गुणसामान्यलक्षणं प्रदर्श्यते।

**'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः'॥**

तथा चाङ्गिनः शरीरे आत्मवत्काव्यप्राधान्येन स्थितस्य रसस्य शृङ्गारादेर्ये धर्माः साक्षात्सम्बन्धास्ते गुणा इति परमार्थः। इत्यनेनैव वर्णादीनामेव धर्मा गुणा इति ये वदन्ति तेऽपि परास्ताः। तथाहि तेषां मते तु न रसधर्मोऽङ्गीकारस्तस्माद् गुणानां रसधर्मत्वकथनेन नालङ्कारेष्वतिप्रसङ्गः इति फलितम्। अत एव रसधर्मत्वे सति रसोत्कर्षकत्वं गुणानां लक्षणमिति सम्यक् संघटते। अथवा रसधर्मत्वं हेयमेव एतदर्थमाह—अचलस्थितयो गुणाः, अव्यभिचरितस्थितय इत्यर्थः। यथा शरीरे हारादयः संयोगसम्बन्धेन, शौर्यादयश्च समवायसम्बन्धेन वर्तन्ते, तथैव काव्ये शब्दार्थशरीरेऽनुप्रासोपमादयः संयोगवृत्त्या, माधुर्यादयो रसे समवायवृत्त्या वर्तन्ते इत्यनयोर्भेदोऽप्यवधेयः। एवं च रसं विना ये नावतिष्ठन्ते, अवस्थिताश्चावश्यं रसमुपकुर्वन्ति ते गुणा इति। ततो रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितत्वम्, अव्यभिचारेण रसोपकारकत्वञ्चेति लक्षणद्वयं फलितम्। वस्तुतः—अचलस्थितयो गुणा इत्यस्यायमाशयो यद्रसविशेषनियतविशेषा गुणाः, अलङ्कारास्तु न नियताः। तदुक्तञ्च **'अङ्गद्वारेण जातुचित्'** इति। अथवा सर्वरसोत्कर्षका नीरसेऽपि च भवन्ति। अतश्च तेषां सर्वालङ्काराणां स्वेच्छया प्रयोग इत्युभयोर्भेदः। न खलु गुणा रसधर्मा मधुरा वर्णा मधुरा रचना—इति लोकव्यवहारात् इति ये कथयन्ति तदसम्यक्। यतो हि प्रतीतिर्द्विधा तस्मात्तत्रौपचारिकं वर्णधर्मत्वमादाय मधुरा वर्णा इति व्यवहरन्ति। अतो विज्ञायते भ्रान्तास्ते ये वास्तविकं वर्णधर्मत्वमेव जानन्तस्तदुदाहरन्ति। नैतावता हि गुणस्य वर्णधर्मत्वं सिध्यति तन्मते वर्ण-

रचनयोरुभयवृत्तित्वे गौरवात् । इति रसस्यैव धर्मा गुणा न वर्णादीनाम् । वामनोक्ता दश शब्दगुणा अर्थगुणाश्च न भवन्ति । अवान्तरगुणानामङ्गिभाववैचित्र्येण आनन्त्यादस्फुटत्वाच्च तथा च 'केचिदन्तर्भवन्त्येषु०' इति ।

## श्लेषालङ्कारविवेचनम्

[1]श्लेषस्तावत् सामान्यतस्त्रिविधः । क्वचिद् द्वयोः प्रकृतयोः, क्वचिद्द्वयोरप्रकृतयोः क्वचित्प्रकृताप्रकृतयोरिति त्रिविधोऽप्ययं पुनः द्विविध एव शब्दश्लेषोऽर्थश्लेषश्च । तत्र शब्दश्लेषः शब्दालङ्कारः । अर्थश्लेषोऽर्थालङ्कारश्चेति मम्मटस्तदनुसारिणः प्रदीपकारादयश्च । द्वयमपि शब्दालङ्कार इति केचित् । द्वयमप्यर्थालङ्कार इत्यलङ्कारसर्वस्वकारादयः । सोऽयं प्रकारान्तरेण द्विविध एव । अयं भावः—शब्दश्लेषः स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धो जतुकाष्ठन्यायेन शब्दयोरेव श्लिष्टत्वात् यथा 'पृथुकार्तस्वरपात्रम्' शब्दश्लेषः । अर्थश्लेषस्तु स्वरितादिगुणाऽभेदादेकप्रयत्नोच्चार्य-

१. श्लेषेऽर्थद्वयं वाच्यम्, कवेरप्याशयोऽर्थद्वयप्रकटने—एव भवति न तथा व्यञ्जनायाम् । यत्र शब्देऽनेकार्थाः प्रतीयन्ते कवेरभिप्रायोऽप्येकस्मिन्नेवार्थे स्यात् तत्र न श्लेषः प्रत्युत तत्र प्रकरणादिना कविसमभिप्रेतोऽर्थो वाचकत्वनियामिकया अभिधावृत्त्या बोध्यते, अन्योऽर्थस्तु व्यञ्जनयैव जायते तस्मात् ध्वनिश्लेषयोर्भेदः । अयं भावः श्लेषालङ्कारस्य विविक्तो विषयो नोपलभ्यते । यथा कुत्रापि समासोक्तिः, श्लिष्टरूपकम्, विरोधाभासः, पुनरुक्तवदाभासः, तुल्ययोगिता, दीपकम्, उपमा चेति । एतेषु समासोक्ति-श्लिष्टरूपक-विरोधाभासपुनरुक्तवदाभासादिषु श्लेषस्य प्राधान्यं न सङ्गच्छते, तेन तुल्ययोगितादीपकोपमादिषु श्लेषप्राधान्यं स्वीकार्यम् । तुल्ययोगितादीनां श्लेषविविक्तविषयस्यापि सम्भवात् श्लेषस्य चोक्तालङ्कारसङ्कीर्णत्वाभावात् । उच्यते श्लेषस्याप्यसङ्कीर्णविषयः 'सर्वदोमाधवः पायात्स योऽगङ्गामदीधरत्' इत्यादिषूपलभ्यते । तेनोक्तालङ्कारेषूक्तानामलङ्काराणामेव प्राधान्यम् । किञ्चार्थानुसन्धानशून्यानामनुप्रासादीनां शब्दालङ्काराणां नाङ्गाङ्गिभावः । अत्र श्लेषादौ तु शब्दनिष्ठत्वेऽपि-

तया शब्दभेदाभावात्-एकवृन्तगतफलद्वयन्यायेन अर्थयोरेव श्लिष्टत्वात् **'यथा योऽसकृत्परगोत्राणाम्'** इत्यत्र। स द्विविधः सभंगोऽभंगश्चेति द्विविधोऽपि-अर्थसापेक्षतयाऽर्थालङ्कार एवेति अलङ्कारश्लेषः उपमाद्यलंकारबाधक इत्यपरा, उभयरूपश्चार्थालङ्कार इति त्वन्येति सुधीभिर्ध्येयम्।

तत्र विचार्यते-शब्दार्थयोर्मध्ये यस्मिन् शब्देऽर्थे वा सति ये दोषगुणालङ्काराः सन्ति, असति च ते तदधीनस्वरूपतया तदीया इति व्यवस्थितिरिति प्राचां प्रवादः। एवञ्च कष्टत्वादिगाढत्वाद्यनुप्रासादयः व्यर्थत्वादिप्रौढचाद्युपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थापनीया इति संक्षेपः। शब्दश्लेषो यथा-स्वयञ्च पल्लवाताम्रभास्वत्करविराजिता' इत्यत्राऽभंगः। प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा—इति सभङ्गः। अर्थश्लेषस्तु—स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिमित्यादौ ज्ञेयः। ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकत्वेन शब्दसाम्यमकिञ्चित्करमिति अत्रोपमैव नास्तीत्याशङ्का परिहरति, तथाहि—**'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव'** इत्यादौ चोपमायां विद्यमानायामपि श्लेषस्यैतद्विषये परिहारेणापि स्थितेः एतद्विषये शब्दालङ्कारस्य श्लेषस्यैव प्राधान्येन वैचित्र्यापादकत्वाच्च तेनैव व्यपदेशो ज्यायान्। प्राधान्येनैव व्यपदेशा भवन्ति नाऽप्राधान्येनेति न्यायात्। यदि नाम सकलकलेत्यादौ-उपमाप्रतिभोत्पत्तिहेतुः श्लेषः स्यात् तदा पूर्णोपमाया निर्विषयत्वापत्तिः स्यादत उक्तालङ्कार एवाङ्गीकर्त्तव्य इति शमस्तुतराम्।

इति कविरत्न दर्शनकेशरि-श्रीमद्बालकृष्णभट्टशास्त्रिसाहित्याचार्य-काव्यतीर्थकृते काव्यप्रबन्धे पूर्वपीठिका समाप्तिं समगमत्। शिवमिति।

---

अस्त्यङ्गाङ्गिभाव इति। पर्यायशब्दपरिवर्तनेऽपि यद्यनेकार्थता न विनश्येत्तदार्थश्लेषः। शब्दश्लेषे तु पर्यायशब्दपरिवर्तनं न जायते। शब्दरिवृत्तिसहानेकार्थपदवत्त्वमर्थश्लेषत्वमिति सारः।

# उत्तर-पीठिका

## ( काव्यपदार्थविवृतिकविसमयादिनिरूपणात्मिका )

### कवित्वम्

अहो ! असारेऽस्मिन् संसारे किञ्चिदपि वस्तु स्थायि न वर्तते। यदि मृत्योः पश्चात्किंचिदपि वर्तते तर्हि तद्यश एव। इति मत्वा सर्व एव जना यशोलाभाय यथायथं प्रयतन्ते, तत्र केचन दानवितरणमेव तन्निदानं मन्यन्ते, केचन कवित्वमेव, केचन च धर्मानुष्ठानमेव, केचन युद्धादिकमपीति स्वस्वप्राक्तनकर्म्मानुसारेण सर्वेषां तथा तत्र प्रवृत्तिर्जायते। यद्यपि सन्ति पूर्वोक्तान्यपि साधनानि यशोलाभाय समीचीनानि शास्त्रसम्मतानि सुशमप्रदानानि च। परञ्च तथापि तत्र यादृशं सर्वोत्कृष्टं साधनं कवित्वं विद्यते नहि तथा विचार्यमाणे तदतिरिक्तमन्यत्किमपि। को हि नाम पुरुषो न जानाति यत्कालिदासप्रभृतयः कवीश्वराः कदा प्रादुरभूवन्, परन्तेषां यशोऽमलानि नामन्यद्यापि तथैव समुज्ज्वलन्ति, सर्वत्र च तेषां कीर्तिप्रकाशः समेधमानोऽहरहर्जागर्ति, कालान्तरेऽपि तथैव स्थास्यति, यावज्जगदिदं नष्टं न भविष्यतीति निःसंशयम्। कवीश्वरान् प्रति कस्यचित्कवेरिदं कथनं कीदृशं युक्तियुक्तम्—'**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः। नास्ति येषां यशःकाये जरामरणजं भयम्॥**' सत्यमेव प्रतिभाति यत्ते मृता अप्यमृता एव। अत एतद्विषये केनचित्कविना कीदृशी रसभावभरिता सदुक्तिः प्रकटीकृता—'**भुवस्तले यामवलम्ब्य भारतीं, महर्षयो व्यासमुखाः पदे पदे। दिवङ्गता अप्यमरत्वमागता, कथं मृता सा सुरभारती भवेत्॥**' अस्तु यस्याः कवित्वशक्तेरेतादृक् महीयान् महिमा, का नाम सा ? कथं वा लभ्येतेत्यादिकं किञ्चिद् विविच्यते। कवित्वं नामातीव दुर्लभं वस्तु, यतस्तत्प्रयत्नेनापि नासाद्यते यादृशमपेक्षितं भवति। तत्परीक्षणं च ततोऽपि दुर्लभम्। यथाह कश्चित्—

**'चमत्करोति केषांचित्सुकृतेन सुभाषितम् ।**
**दुर्लभं पुनरेतस्य वैलक्षण्यपरीक्षणम् ॥'**

प्राचीनैरर्वाचीनैश्च पण्डितैः **'कविर्द्वितीयो ब्रह्मा'** इति मन्यते। **'कविर्मनीषी परिभूः स्वयंभूः'** इति तन्नामसु दर्शनात्-भगवान् स्वयमपि कविः। **'कविं पुराणमनुशासितारमि'ति** स्वयं भगवद्वचनाच्च। **'कविः क्रान्तदर्शी मननशीलो दूरद्रष्टे'ति** यास्कः। तथ्यमपि च तत्, यत्कविरपि ब्रह्मवदेव सृष्टिं रचयितुं शक्नोति करोति च। स यदीच्छेत् क्षुद्रजनानामपि यशःसौरभं सर्वत्र प्रसारयेत्। महामहिमशालिनामपि च महिमानं कलङ्कयेत्। स चक्रवर्तिनोऽपि कवित्वबलेन तिरस्करोति किं पुनरन्यान्। कश्चित्कविः साभिमानं राजानं प्रत्येवमाह—

**'तव शस्त्रबलं मम शास्त्रबलं तव कोशबलं मम कोषबलम् ।**
**तव शौर्यबलं मम धैर्यबलं किमतः परमस्ति तवाधिकता ॥'**

वस्तुतस्तु कविचक्रवर्तिनोर्महदन्तरम्। यतो हि चक्रवर्ती राजाऽपि सृष्टिनिर्माणे न प्रभवति, केवलन्तु किञ्चित्कालपर्यन्तं स्वप्रतापचमत्कृतिं प्रदर्श्य तिरोहितो भवति परन्तु तथा न कविः। यथाह कश्चित्—

**दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।**
**रसयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥'**

कविमहिम्नोऽचिन्त्यत्वमनिर्वचनीयत्वञ्च। यथा ब्रह्मा सर्वज्ञः सर्वकार्यपटुश्च भवति तथा कविरपि, परन्तु ब्रह्मनिर्मितौ तत्र सर्वत्र रम्यता न दृश्यते, दृश्यते तु सा कविनिर्मितौ। यथाह कश्चित्—

**कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः ।**
**कविं प्रजापतिं त्यक्त्वा रम्यनिर्माणशालिनाम् ॥'**

प्रकृतिसिद्धकविरेव सुकविर्महाकविश्चोच्यते, तस्य च—

**'ज्योत्स्नेव हृदयानन्दः सुरेव मदकारणम् ।**
**प्रभुतेव समाकृष्टलोका कवयितुः कृतिः ॥'**

तादृशकविलक्षणमेव च **'प्रतिभाशक्तिसम्पन्नो लोकवेदविचक्षणः। वेदलब्धप्रसादाढ्यः कविरित्यभिधीयते ॥'** तत्र काव्यघटनानुकूलशब्दार्थोपस्थितिः प्रतिभा, शक्तिः कवित्वबीजभूतसंस्कारविशेषः,

ताभ्यामुपेतः लौकिकवैदिकेतिवृत्तमात्रनिपुणः कुलपरम्पराराध्यस्वेष्ट-देवप्रसादलब्धसाधनः कविर्भवति । तादृशप्रकृतिसिद्धकवेरप्यभ्यासादी-नामावश्यकता । अत उक्तञ्च **'व्युत्पत्तिः शक्तिरभ्यासस्त्रितयं काव्य-साधनम्'** एतादृशः कवेरेव काव्यविषये विदुषां सदुक्तिरेषा सर्वथा संगच्छते—**'कान् पृच्छामः ? सुराः स्वर्गे निवसामो वयं भुवि । किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ।'** 'श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्' । इति प्राचां वाचामनुरोधे-नान्योऽपि शिक्षाभ्यासादिबाहुल्येन कविर्भवितुमर्हति, परञ्च स तस्य कवेः समकक्षतां नारोढुमीष्टे । 'हठादाकृष्टानां कतिपयपदानां रचयिता कविः पदग्रन्थनमेव काव्यं मन्यते परन्तु स स्वत एव किञ्चिद्‌ड्डीय क्षीणो भवति, कविता च तस्य लुप्यते । कविः प्रकृतिवाटिकाविकासी मधुमासः कवित्ववृक्षे रसालंकारवस्तुध्वनिभिरेव सफलपुष्पपर्णं सन्नि-वेश्य नीरसमपि सरसं करोति किं पुनरन्यत् । केचित्परार्थापहरणं कवेर्दोषमामनन्ति यथा—**'कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते'** इत्यादौ, परन्तु स दोषः सिद्धान्तपक्षे भवितुमर्हति न कार्यक्षेत्रे । यतो ह्येकोऽपि कविस्तादृशो न दृश्यते यः शब्दतोऽर्थतो वा परापहरणं न कृतवान् । सर्व एव स्वपूर्ववर्तिन एवोपजीव्य कवयन्ति काव्यं कवयः । अत एतादृशस्य कवेः काव्यमपि कार्यक्षेत्रे न दोषाय भवति । अतस्तदर्थं सर्वैरेव प्रयतनीयम् 'अनेकजन्मसंसिद्धिस्ततो याति पराङ्गतिमि'ति भगवद्वचनात् । 'कर्मणैव हि संसिद्धिरिति' चापि, अस्तु कविः कवितां कृत्वा न स्वनामैवाऽजरममरं च कतु वाञ्छति । येन तस्य यशःसौरभं सर्वत्र सत्वरं प्रसृतं भवति, पंञ्चभूतनिर्मितदेहेन स विनष्टोऽपि यशस्वी कविः यशःशरीरेण सर्वदा जीवत्येव, तदुक्तमपि—**'कीर्तिर्यस्य स जीवति'** । अतो विज्ञायते संसारे मनुष्या यानि यानि वस्तूनि नाना-कष्टोपभोगानन्तरं प्राप्नुवन्ति तानि सर्वाणि नाशशीलानि । किन्तु यश—एवंविधं यत्तत्कालोऽपि नाशयितुं न शक्नोति । कालः सर्वेषामु-परि प्रभवति, किन्तु यशस उपरि न । अतो यश एव केवलं मरणा-नन्तरमपि तिष्ठति । तादृशं च यशः कवित्वेनैवोपलभ्यते प्रागुक्तमेव ।

अतः सर्वैरेव विमलशेमुषीकैः सहृदयहृदयैरन्यैश्च विद्वद्भिः स्वयशः-प्रकाशाय सर्वप्रथमं कवित्वसाधनमेवावलम्ब्य तत्र यथाशक्त्या यतनीयम् । येन कालान्तरे तेऽपि कवित्वबलेन स्वयशःसौरभं सर्वत्र प्रसार्य स्वनामान्यप्यजरामराणि विदध्युः, को न जानाति यन्मयूरबाणप्रभृतयः कवीश्वराः कवित्वबलेनैव दुर्लभमपि तत्—स्वेप्सितं कार्यमनायासेनाकार्षिषुरिति । कीदृशमुक्तं केनचित् ।

सन्दर्भशक्तिरहिताः सुधियो मुधैव,
　　शब्दागमश्रममहो दधते वराकाः ।
लब्ध्वापि हन्त कुसुमान्यतिगन्धवन्ति,
　　विप्रो यतिर्बत करिष्यति मुण्डितः किम् ।
सूर्यो न पश्यति न बोधति यत्सुधांशुः,
　　ब्रह्मा भवः सुरपतिश्च न वीक्षते यत् ।
यद्योगिनोऽपि न विलोकयितुं समर्थाः,
　　सर्वं करस्थमिव तत्कवयो वदन्ति ।।
नामात्मकं किमपि रूपमयञ्च विश्व-
　　मेतद् द्विधा विरचितं यदिहावभाति ।
आद्यस्य तत्र कविरेव परो विधाता,
　　ब्रह्माऽपरस्य रचनां विदधातु कामम् ।।
सोमेन किं किमु रथान्तरसाकभिर्वा,
　　न ब्रीहिभिर्न पयसा न कुशैश्च कृत्यम् ।
उक्थैरलं निखिलवस्तुविदस्तु देवाः
　　तुष्यन्ति केवलमिहादिकवेर्वचोभिः ।।

'कवित्वं दुर्लभं लोके शक्तिस्तत्र सुदुर्लभे'ति युक्तमुक्तम् । किं बहूक्त्याऽलमतिपल्लवितेन ।

## कालिदासः

महाकविः कालिदासः कदा प्रादुरासीत्स्वजन्मना कं देशमलञ्चकार । के के ग्रन्थाश्चानेन विरचिताः । इति प्रश्नस्य हन्त निर्णयो

नाद्यावधि जातः । मन्यन्ते च तत्र बहवो विद्वांसो यन्महाकविरयमब्द-सञ्चालकस्य विक्रमादित्यस्य विद्वत्समितिनवरत्नशिरोमणिः समभूत् । प्रमाणं तत्र तु यथा—

**'धन्वन्तरिक्षपणकामरसिंहशङ्कु-**
**वेतालभट्टघटखर्परकालिदासाः ।**
**ख्यातो वराहमिहिरो नृपतेः सभायां**
**रत्नानि वै वररुचिर्नव विक्रमस्य ॥'**

परमत्र विचार्यते । यद्वर्तमानविक्रमसंवत्सरः सर्वप्रथमं विक्रमादित्येन न प्रचालितः । किन्त्वयं प्रथमं मालवसंवत्कथ्यते स्म । सम्प्रति अन्वेषकैः बहूनि ताम्रपत्राणि एतादृशानि लब्धानि येषु **'मालवानां जयः'** इत्येवं लिखितमस्ति । स च जयोऽन्वेषकाणां मतेन मालववीर-द्वारा ग्रीकयवनराजं मिलिन्दं पराजित्य पुष्यमित्रेण तत्पुत्राग्निमित्रेण वा कृत आसीत् । तेनैव तज्जयोपलक्ष्ये एको यज्ञोऽपि कृतः, यस्मिन् महाभाष्यकारः पतञ्जलिरपि सम्मिलित आसीत् । यदुक्तं महाभाष्ये **'इह पुष्यमित्रं याजयामः'** । पुनश्च तस्यैव मालवसंवत्सरस्य नाम गुप्त-वंशीयचन्द्रगुप्तद्वितीयेन मालववीरद्वारैव शकान् विजित्य स्वनाम्ना विक्रमसंवद्रक्षितम् । तस्य चारम्भकालस्तेन स एव रक्षितः । चन्द्रगुप्त-विक्रमादित्यस्तस्मिन् समये उज्जयिन्यां राज्यमरोत् । एतस्यैव सभायाः प्रधानपण्डितः कालिदास आसीत् । एतत्सर्वं कालिदासेनैव ज्योतिर्विदा-भरणग्रन्थे स्पष्टतया लिखितम् । यथा–'वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते, मासे माधवसंज्ञके च विहितो ग्रन्थक्रियोपक्रमः' । इत्यादिकं विलिख्य चन्द्रगुप्तविक्रमादित्यकालीन एव कालिदास इति । अत्र विक्रमश्चोपाधिरित्यप्यवधेयम् । केचित्तु शिलालेखादीनां प्रमाण-मभ्युपगम्य कविसार्वभौमः कालिदासः क्रिस्त्वजननात्परं पञ्चमशतके अथवा षष्ठशतके आहोस्वित् तत्सन्निकृष्टकाले भूमण्डलमण्डनो बभू-वेति वदन्ति । अस्मन्मते तु – अयं महाकविः पर्वतीयः[1], तत्र कालीमठे

१. महाकविः कालिदासः पर्वतीयः । तत्कृताः सर्व एव ग्रन्थास्तत्पुष्टिकराः सन्ति जनश्रुतिरपि तत्र सम्यक् संघटते । तदाराध्यसिद्धकालीक्षेत्रमपि तत्रास्ति । अतो विज्ञलेखकैरन्वेषकैश्चात्र सत्यं किमिति मृग्यम् ।

च कालीकृपयैव सिद्धकविर्जातः कालीदासेत्याख्यामभिपेदे च। पुनरनन्तरं विक्रमादित्यसभारत्नत्वमवाप तत्रैव स्वःशेषजीवनं यापयामास। अन्ये तु जनश्रुतिमादाय भोजकालीनोऽयं कालिदास इति प्रलपन्ति। सा च जनश्रुतिरेवम्–यदसौ कालिदासो जन्मना ब्राह्मणोऽतीव दरिद्रः केवलं प्रत्यहं एडकासंघपोषणार्थम्–अजाभिः सह बने बभ्राम। एकदा महाराजभोजेन कस्याश्चिद्राजकन्यकायाः कृते कुरूपोऽतिनिर्धनो मूर्खवरोऽन्वेषणीय इत्याज्ञप्ताः कतिपये कर्मचारिणस्ते चैकां वृक्षशाखामारूढं तामेव छिन्दन्तं कालिदासं ददृशुः। अयमेव हि महान् मूर्ख इति मत्वा तमानीय च **'यो मां जेष्यति शास्त्रार्थे स मे भर्ता भविष्यति'** इति कृतप्रतिज्ञया राजपुत्र्या विद्यावत्या सह तस्य विवाहः साङ्केतिकशास्त्रार्थद्वारेण कृतवन्तः। विदुषी विद्यावती च यदयं पण्डितो मूर्खो वेति ज्ञातुमेकान्तसम्भाषणे **'अस्ति कश्चिद् वाग्विशेषः'** इत्यवदत्। अन्ते मूर्खोऽयमिति ज्ञात्वा स स्वगृहान्निष्कासितः। ततः खिन्नः कालिदासः क्वचिद्विजनप्रदेशे समेत्य तत्र देव्याराधनं कृत्वा तत्प्रसादेन च लोकोत्तरं विद्यावरं लब्ध्वा पुनः स्वकान्तागृहमागत्य च **'अनावृतं कपाटं देही'**ति जगाद, तावत्सा तस्मिन्—'अस्ति कश्चिद् वाग्विशेषः' प्रश्नमिमं पुनः प्रचक्रे। यस्मिन् स प्रश्नस्य प्रतिपादादिमाक्षरं गृहीत्वा त्रीणि काव्यान्यरीरचत्। तदा विद्यावती प्रसन्ना जातेति जनश्रुतिरेषा सत्याऽसत्या वेति न जानीमहे इत्यनेन अस्माकमयं कालिदासो भोजकालीन एवेत्यत्रापि केवलं न वयं दृढाग्रहाः तथ्यप्रमाणविरहात्। संस्कृतसाहित्यावलोकनेन ज्ञायते कालिदासः, ईशातः पूर्वं प्रथमशतके प्रादुर्बभूवेति। भवतु – उज्जयिनी, अलका-सिप्रानदी-विन्ध्यपर्वतादीनां विशेषवर्णनं मेघदूतादिष्ववलोक्य तद्देशीय एव कालिदास इति प्रतीयते। उज्जयिनीवास्तव्य इति तु बहूनां मतम्। परञ्च लेखकमतानुसारमयं महाकविस्तु गढ़देशीय[1] एवेति।

---

१. 'महाकविकालिदासो 'गढदेशीय' इति हिन्दी-पुस्तक-विशालकार्यालय-गुप्त-काशीतोऽपि प्रकाश्यते। अलकापुरी गढ़वाल प्रान्त एव।

## कालिदासकृतग्रन्थाः

एते—रघुवंशः, मेघदूतं, कुमारसंम्भवः, ऋतुसंहारः, श्रुतबोधः, मालवकाग्निमित्रं विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलादयः कालिदास-कृता ग्रन्था प्रायो वैदर्भीरीत्या तथा प्रसादाख्येन गुणेनैव समलङ्कृता सन्ति।

## मेघदूतम्

मेघदूतं हि नाम खण्डकाव्यम्। तदुक्तञ्च तल्लक्षणं दर्पणे '**खण्ड-काव्यं भवेत्काव्यस्यैकदेशानुसारि च**' पुस्तकस्यास्य भागद्वयं वर्तते। पूर्वभागं केचित्पूर्वमेघस्तथा उत्तरभागमुत्तरमेघ इति नाम्ना कथयन्ति। विप्रलम्भश्रृङ्गाररसस्यैवास्मिन् पुस्तके प्राधान्यमस्ति। अत्र हि कस्य-चिद् विरहविधुरस्य यक्षस्य कथावर्णनम्, तच्च रामायणीयं रामस्य सीतां प्रति हनूमत्सन्देशमादर्शत्वेन पुरोनिधायैव निर्मितमिदं महा-कविना। अत्र च कालिदासो व्यङ्ग्यमर्यादया रामायणकथामेवांशतो ध्वनयति। वर्णननैपुण्यश्चात्र लोकोत्तरमेव। दूतकाव्य-कवीनां मध्ये कालिदास एव सर्वादिमो मार्गदर्शी दूतकवीनाम्। अत्र कश्चिद्यक्षः स्वपत्न्यामनुरक्तो गुह्यकेश्वरस्य स्वभर्तुर्नियोगं शून्यं कुर्वन् तेन '**वर्ष-मेकं कान्ताविच्छेददुःखमनुभवन् रामगिर्याश्रमे तिष्ठ**' इति कोपेन शप्तस्ततो वर्षाकाले समागते नितान्तविधुरोऽसौ यक्षो ज्ञानरहित इव मेघमेव दौत्येन सम्प्रेष्य स्वप्रियाया निकटे आत्मनः कुशलावस्थां प्रापयितुमिच्छन् स्वनगर्या अलकाया गमनमार्गं व्यजिज्ञपत्। अतः पर-मुत्तरमेघे—अलकानिवासिनां तथा स्वप्रियायाश्चाभिज्ञानं प्रकारेण च तस्या आश्वासनादिकमिति युक्तं वर्णितम्।

## अलकावर्णनम्

अस्यां हि रम्या वनितास्तुङ्गाः प्रासादाः षण्णामेव ऋतूनां सर्व-काले प्रादुर्भावः। अत्र यक्षाः सितमणिमयेषु हर्म्यस्थलेषु उत्तमस्त्रीभिः कल्पवृक्षप्रसूतं रतिफलाख्यं मद्यं पिबन्ति '**अलौकिकसौन्दर्यतया सुर-प्रार्थिता यक्षकन्याः शीतलैर्वातैः सेव्यमानास्तटजानां मन्दारवृक्षाणां**

छायायां प्रशमितातपाः सत्यः स्वर्णबालुकासु क्रीडन्ति। अत्र तन्तुजालावलम्बामेघापायेन विशदैः चन्द्रपादैः सयुक्ताश्चन्द्रकान्ताः स्त्रीणां सुरतजनितां प्रियतमभुजोच्छ्वसितालिङ्गितानामङ्गग्लानिं व्यालुम्पन्ति। अत्र देवाङ्गनावारमुख्याभिः परिवर्धितामोदाः कामुकाः कुबेरकीर्तिं किन्नरैः सह प्रतिदिनं वैभ्राजाख्ये बहिरुपवने सुखेन कालमतिवाहयन्ति। अस्यां हि प्रातःकाले स्त्रीणां प्रणयिसदनगमनं तासामलकपतितैर्मन्दारपुष्पैः कर्णविभ्रंशिभिश्च कनककमलैरनुमीयते। अत्र हि मन्मथोऽपि शिवनिवासस्थानं ज्ञात्वा षट्पदज्यं चापं न वहति। तस्य कामिजनविजयव्यापारं भ्रूभङ्गचतुरैर्विलासिनीकार्यं साधयतीति संक्षेपः।

अत्र यक्षेश्वरस्यायमनुचरो धीरोदात्तो नायकः[1]। नायिका चास्य पत्नी एका स्वकीया मध्या विरहिणी। मेघसञ्चयादय उद्दीपनविभावाः। ज्ञानशून्यतादिरनुभावः। अवसादादिर्व्यभिचारी। रतिः स्थायी। शृङ्गारोऽत्र रसो विप्रलम्भाख्यस्याङ्गम्। करुणादयोऽस्याङ्गरसाः। रीतिश्च पाञ्चाली वैदर्भी च। प्रसादो गुण इति।

## अभिज्ञानशाकुन्तलम्

महाकवेः कालिदासस्य अनन्यकवित्वशक्तिपरिचयदायकमभिज्ञान-

१. नायकलक्षणं यथा—त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही। दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता। स चतुर्विधः, यथा—धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च। धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः। अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः। स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः। धीरोद्धतो यथा–मायापरः प्रचण्डश्चपलोऽहङ्कारभूयिष्ठः। आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः। धीरललितो यथा—निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्। धीरप्रशान्तो यथा—सामान्यगुणैर्भूयाद् द्विजादिको धीरप्रशान्तः स्यात्। अग्रे सर्वत्रैतेषां तत्र तत्र लक्षणानि पाठकैः स्वयमूह्यानि। विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया। सामान्यनायिका तु–धीरा कलाप्रगल्भा स्याद्वेश्या-सामान्यनायिका। मध्या यथा—मध्या विचित्रसुरता प्ररूढस्मरयौवना। प्रगल्भा-स्मरान्धा गाढतारुण्या समस्तरतकोविदा।

शाकुन्तलं नाम [1]नाटकमपि । शकुन्तलायां च प्रकृतेस्तथा गृहस्थानां सन्यासिनामपि च सम्यग्रूपेण लोकोत्तरं रम्यं वर्णनं कृतं कविना। एतेनैव नाटकेन कालिदासः स्वविजयपताकां न केवलं भारते वर्षे अपि च भूमण्डले एव स्थापितवान् । अस्मिन् नाटके या कथा सा पद्मपुराण-

१. नाटकलक्षणं यथा–नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् । विलासद्धर्यादिगुणवद् युक्तं नानाविभूतिभिः । सुखदुःखसमुद्भूतिनानारसनिरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः । प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्योनिर्वहणेऽद्भुतम् ।

विमर्शसन्धिः, यथा—यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्श उदाहृतः । यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः । पञ्चधैवेति वृत्तस्य भागाः स्युः पञ्चसन्धयः । अर्थान्तरैकसम्बन्धः सन्धिरेकान्वये सति । इति सन्धिलक्षणम् ।

प्रस्तावनालक्षणम्—नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा । प्रस्तावनाभेदाः—उद्घातकः कथोद्घातः प्रयोगातिशयस्तथा । प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः । अङ्कलक्षणं यथा—प्रत्यक्षनेत्रचरितोरसभावसमुज्ज्वलः । अन्ते निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ।

दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् । दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम् । अभिनयश्चतुर्विधः—भवेदभिनयोऽवस्थाऽनुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्यः सात्विकस्तथा । रूपकस्य भेदा दश, यथा—नाटकं च प्रकरणं भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ।

प्रायो भारती वृत्तिः—भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ।

पूर्वरङ्गः—यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गं स उच्यते ।

विदूषकलक्षणं यथा—कुसुमवसन्ताद्यभिधः कर्म वपुर्वेशभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ।

मुपजीव्य लिखिता। अस्य प्रमथांके दुष्यन्तस्य [1]कण्वाश्रमगमनं तत्र शकुन्तलादर्शनेन तस्य मोहः, द्वितीये च राजधानीं प्रति विदूषकप्रेषणम्, एवं यज्ञविघ्ननिवारणार्थमाश्रमे राज्ञो निवासः, तृतीये च कन्दर्पसन्तप्त-योर्दुष्यन्तशकुन्तलयोरवस्थावर्णनम्, तयोर्गान्धर्वविधिना विवाहश्च। चतुर्थे दुष्यन्तायत्तचित्तया शकुन्तलया दुर्वाससोऽसत्कृतिर्येन च शापः, शकुन्तलां सगर्भामिति ज्ञात्वा कण्वेन दुष्यन्तनिकटे प्रेषणं तथोपदेश-दानञ्च। पञ्चमाङ्के—दुर्वाससः शापप्रभावाद् राज्ञो दुष्यन्तस्य विस्मृतिः। शकुन्तलायाश्चाप्सरोभिस्तिरोधानमेवं केनचिद् धीवरेण तस्याः हस्तभ्रष्टाङ्गुलीयकप्राप्तिः। षष्ठे राजपुरुषैरानीतस्य धीवरस्य सान्निध्यात्तदङ्गुरीयकप्राप्त्या शापावसानेन स्मृत्युद्गमः, तेन काम-पीडा-एवमिन्द्रवचनेन देवानां साहाय्यकरणाय त्रिदिवगमनम्। सप्तमे ततः प्रस्थिते महीचिमुनेराश्रमे[2] शकुन्तलायास्तत्पुत्रेण सर्वदमनेन सह च प्राप्तिः। एवमेभिः सार्धं राजधानीगमनश्च वर्णितमस्ति।

---

विटलक्षणं यथा—सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः। वेशोप-चारकुशलो वाग्मी मधुरोऽथ गोष्ठ्याम्।

अङ्कवतारलक्षणं तथा—अङ्कान्ते सूचितः पात्रैस्तदङ्कस्य विभागतः। यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः।

विष्कम्भो यथा—वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः।

प्रवेशको यथा—प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजकः। अङ्कद्वयान्त-र्विज्ञेयः शेषं विष्कम्भके यथा।

चूलिका—अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका। गोष्ठी-प्राकृतैर्नवभिः पुंभिर्दशभिर्वाऽप्यलंकृता। नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी।

१. अयमाश्रमो गढवाले चौकोटचासमीपे 'कण्वास्' ग्रामोपवर्त्ती मालिनी च नदी तत एव निःसरन्ती विजनौरभूभागे वहन्ती तत्र गंगायां संगच्छते। सा कालीदासप्रिया शिवपादशिला, क्रौञ्चरन्ध्रपर्वतश्चापि तत्रैव विद्यते। कालीमठं तत्सिद्धपीठमपि तत्रैवास्ति। अथवा कोटद्वारसमीपेऽप्येकस्तदाश्रमोऽस्ति एतयो-रेवैकः स इति निश्चीयते।

२. अयमप्याश्रमो गढवाले। देवलोकगगनमार्गेऽपि तत एव 'अथवा गढ-प्रदेश एव भूस्वर्ग इत्युच्यते।'

धीरोदात्तो दुष्यन्तोऽत्र नायकः, परकीया शकुन्तला चात्र नायिका। चन्द्रचन्दनकुसुमादीन्युद्दीपनानि, परस्परचक्षूरागादिक्रियाऽनुभावः, निर्वेदादयो व्यभिचारिणः, सम्भोगशृङ्गारोऽङ्गी रसः, हासकरुणविप्रलम्भादयोऽङ्गरसाः, विदूषकः सहायः, प्राधान्येन वैदर्भी रीतिः प्रसादो गुणः **'तवास्मि गीतरागेण हारिणा प्रसभं हृतः। एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥'** इत्यनेनैवात्र पात्रप्रवेशो जायते, अतोऽत्र 'अवलगिताभिधैया प्रस्तावना, प्रस्तूयते इतिवृतं समुद्भाव्यतेऽनया सा प्रस्तावना, तस्या लक्षणं यथा—यत्रैकत्र समावेशात् कार्यमन्यत्प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः ॥ **नान्दी संघटनन्त्वत्रेत्थम्**—'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥' 'माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत' इति **नान्दीलक्षणम्**। नन्वभिज्ञानशकुन्तलायां—**'या सृष्टिः स्रष्टुराद्या०'** इत्यादौ द्वादशाधिकपदघटितैकश्लोकप्रणीतायाः कथं संग्रह इति चेत्तस्याः कालिदासादिमहाकविप्रबन्धेषु च' **'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी०'** इत्यादिना ग्रन्थकृतैव नान्दीत्वाभावस्य वक्ष्यमाणत्वात्, एतत्सूत्रधारादिक्रियमाणं मङ्गलं सूचितमपि च कालिदासस्य प्रबन्धे **'या सृष्टिः स्रष्टुराद्या'** इत्यादौ नान्दीलक्षणसमन्वये नास्ति दोषः। यतो यत्र नान्द्यन्ते रङ्गद्वारं नास्ति तत्र सैव रङ्गद्वारं, यत्र रङ्गद्वारमेवास्ति न नान्दी, तत्र सा फलबलाऽनुमेया। यत्र च प्रबन्धे बहवः श्लोका वर्तन्ते तत्र पूर्वश्लोकद्वयं नान्दी, अपरे रङ्गद्वारमतो मालतीमाधवे द्वावेव श्लोकौ वर्तेते। अतस्तत्र अष्टपदा नान्दी श्लोकस्य प्रतिचरणमेव पदशब्देन विवक्षितमिति। विमर्शसन्धिश्चात्र। शकुन्तैः पक्षिभिर्लालिता पालिता या सेति तन्नामकरणे निदानम्। एवं सर्वत्र तत्र तत्र पाठकैरवधेयम्।

## उपमा कालिदासस्य।

सुप्रसिद्धेयमुक्तिः कविमण्डले—**उपमा कालिदासस्य**। उक्तेश्चास्या अयमेवाशयो यदुपमायां यादृक् सिद्धहस्तः प्रशस्तः कविः कालिदासोऽस्ति न तादृगन्यः कश्चित्कविः।' यथा तत्कृतशाकुन्तले—**'अधरः**

**किसलयरागः कोमलविटपानुकारिणौ बाहू। कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥'** अत्र पद्ये शकुन्तलाया दन्तच्छदे कैसलयं लौहित्यं, भुजद्वये कोमलविटपानुकारित्वं, आवयविकयौवने कौसुमं लुब्धत्वञ्च सन्दर्श्य कविनाऽनुत्तमोपमा सन्नद्धा। कालिदासादृते तादृश्युपमा न केनापि दत्ता भविष्यति । अपि च—**'कुसुममिव पिनद्धं पाण्डुपत्रोदरेण०' 'सञ्चारिणी दीपशिखेव रात्रौ, यं यं व्यतीताय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥'** इत्यादौ कीदृशी उपमाच्छटा विद्योतते। अन्यत्रैवं पाठकैः सर्वत्र स्वयमूह्यम् ।

**'काव्येषु नाटकं रम्यं नाटकेषु शकुन्तला ।**
**तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥'**

इत्युपर्युक्तपद्यरचनेन तद्रचयितुरिदमाकूतं प्रतीयते—यदहं 'शकुन्तलानाटकस्थश्लोकचतुष्टयसमुत्तमत्वं कल्पयेयम्' इति स्वाभिसन्धिं स्वस्वान्तपटले निधाय सारालङ्कृतं पद्यं जग्रन्थ सः। यद्यपि सुन्दराणि सन्ति खलु काव्यानि, परन्तेष्वपि रम्यं दृश्यं काव्यम्। नाटकान्यपि भवन्ति खलु रमणीयानि, परं भावभासकं प्रकरणललितं तत्रापि शकुन्तलानाटकमेव सुवरीयस्तमम् । यद्यपि सर्वञ्चित् शकुन्तलानाटकं रम्यं, तथापि तच्चतुर्थेऽङ्के ललनाधुरीणाया महिषीमङ्गलमयगुणप्रवीणायाः सुन्दरीसकललावण्यसमन्वितायाः स्वीयसौन्दर्यसमस्तभुवनव्यामोहिकायाः प्रियदर्शनायाः शकुन्तलायाः प्रस्थानानेहसि सर्वत्र भारतीकोष-भगवतीतोषोपलब्धिविकासेन उपमाविलासेन अकृतबह्वायासेन श्रीमता कविकालिदासेन काश्यपमुखाद्यत् पद्यचतुष्कं प्रतिपादितम्, तत्र खलु भावस्य प्रस्फोटनं, सांसारिकव्यवहारस्य प्रदर्शनम्, अचेतनाज्ञानिसत्त्वैः सह प्रेमप्रकटनं, यन्न्यधायि पद्यचतुष्कमध्ये तदेव सर्वस्वान्तद्रावकं प्रशमितचित्तदुःखपावकं वरीवर्ति । अत एव केनापि कविना कालिदासकवितया वशवर्तित्वमेत्याभाणि किल तच्छ्लोकचतुष्टयसमुत्तमत्वम् ।

यथा—

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया**
**कण्ठःस्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।**
**वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः**
**पीडयन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ।। १ ।।**

अत्र श्लोके—यास्यतीत्यनेन न तु याता, न तु याति, इति पदम् । अन्यच्च—अरण्यौकसो मम खलु काश्यपस्य तनयाविश्लेषेणैतादृशं वैक्लव्यं वर्तते, न जाने गार्हस्थ्याः कथमिव विक्लिष्टिमेष्यन्ति इति भावोऽपि समुत्तमतां जनयति ।

अपि च—

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या**
**नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**
**आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः**
**सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ।। २ ।।**

अत्र खलु द्वैतीये पद्ये—चैतन्यशून्यान् विटपिनोऽज्ञानिनो मृगान् प्रति शकुन्तलानुरागं समाख्याय तत्प्रस्थितिविज्ञप्तिपुरस्सरं तेभ्योऽनुज्ञाग्रहणमस्यादर्शरूपत्वात् समासोक्त्यलङ्कृत्यलङ्कृतत्वाच्चोत्तमत्वं प्रतीयते ।

तथा हि—

**अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-**
**स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम् ।**
**सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया**
**भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ।।**

श्लोके चात्र तृतीये खलु वसुन्धरेशं प्रति सन्देशप्रदाने तस्मादधिकस्यापि स्वस्य क्षोदीयस्त्वं संवर्ण्य शकुन्तलाजनितविषादमपेक्ष्य सुस्त्रीत्वभावनयनमित्येकविध उपदेशोऽपि जनमनोरञ्जनो राजतेतराम् ।

अन्यच्च—

**शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने**
**भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।**
**भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी**
**यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ।। ४ ।।**

तुरीयेऽस्मिन् पद्ये—उद्वाहदिष्टोचितोपदेशप्रदानं स्त्रीत्वपदमिलन-योग्यं कथनं सुयोग्यमिति संल्लक्ष्यते, तदपि करुणापूरितं, सदतितरां राजते । अत एव केनचिदीदृशं पद्यं स्वमनसि संल्लक्ष्यैकच्छन्दस्त्वेनैक-रसत्वेन चास्य सर्वोत्तमता सूचिता ।

प्रेष्ठाः पाठकमहाभागाः ! दर्शने तु पद्यचतुष्टयस्यास्य नास्ति खलु वैशिष्टयम्, परं मुग्धायाः शकुन्तलायाश्चितिशक्तिशून्यान् पादपान् प्रति स्नेहप्रवृत्तिप्रदर्शनं, यथा—

**'नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**

तथा च स्वामिसदनगमनसमये तेभ्योऽनुज्ञानाय कथनम् । एवमेव तस्याः किलाज्ञानिनो मृगान् प्रति प्रणयव्यवहारः, तथा तेभ्योऽपि अनुज्ञाग्रहणायाख्यानम् । यथा प्रथमांशे तु—

**'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या ।'** इति ।

अपरांशे तु—

**'सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ।'** इति ।

तथा मुनेश्च काश्यपस्य वनवासित्वेऽपि शकुन्तला-पतिनिकेतन प्रेषण समये तद्विश्लेषजविक्लवे गलनिरोधः परिदेवनञ्च । तथात्मन सर्वविषयेऽधिकत्वे सत्यपि शकुन्तला-दाननिमित्तमधिश्रित्य दुष्यन्ता स्वीयक्षोदीयस्त्वप्रतिपादनम् । इमे खल्वद्वितीया भावा एवास्य श्लोक चतुष्टयस्यानुत्तमत्वं सूचयन्ति, जनमनोरञ्जयन्ति च नितराम् । अ एव तस्य कवेर्मतमनुसरामः समर्थयामश्च, यत्सत्यमेव तेनोपर्युक्तपद्यो योग्यैव योग्यता व्यक्तिकृतेति साह्लादं साभिमानं महाकविकालिदास महामहत्त्वं मन्यामहे ।

## कालिदासस्य काव्यकौशलम्

यथा **'ग्रीवाभङ्गाभिरामं, मुहुरनुपतती'**त्यादौ स्वाभावादिवर्ण

महाकवेः कीदृशं चातुर्यम्, येन सहृदयहृदयं नितरां प्रसीदति। एवं च– **'अनाघ्रातं पुष्पम्'** इत्यादौ सन्ध्याकालवर्णनस्य **'रम्याणि वीक्ष्य'** इत्यादौ गूढदार्शनिकभावस्य च **'वाच्यस्त्वया मद्वचनात्स राजा'** इत्यादौ गूढव्यङ्ग्यस्य **'साहं तपःसूर्यनिविष्टदृष्टिः'** इत्यादौ सीताया अलौकिकपातिव्रतधर्मस्य चैवमेव **'नृपस्य वर्णाश्रमपालनं यत्'** इत्यादौ राजधर्मस्य **'क्वचित्प्रभालेपिभिरिन्द्रनीलैः'** इत्यादिके प्रयागवर्णनस्य **'नीवाराः शुककोटरा'** इत्यत्राश्रमस्य **'सुभगसलिलावगाहाः'** इत्यादौ ग्रीष्मर्त्तोः **'यदालोके सूक्ष्मं व्रजति'** इत्यादौ प्रकृतेः **'सरसिजमनुविद्धम्'** इत्यादौ सौन्दर्यस्य **'पुष्पं प्रवालोपहितं यदि स्याद्'** इत्यादौ स्मितस्य **दर्भाङ्कुरेण चरणः'** इत्यत्र प्रेम्णः **'स्रगियं यदि जीवितापहा'** इत्यादौ करुणस्य **'श्यामा स्वर्गं चकितहरिणी'** इत्यादौ विरहस्य **'त्वामामनन्ति पुरुषम्'** इत्यादौ सांख्यशास्त्रस्य **'कस्यात्यन्तं सुखमुपनतम्'** इत्यादौ सुखदुःखपरिवर्तनस्य **'रिक्तः सर्वो भवति हि लघुः'** इत्यादौ दयालुतायाः कीदृशं रम्यं लोकोत्तराह्लादजनकं सरसं महत्तरञ्च वर्णनं कृतं कविकुलगुरुणा कालिदासेन, कः खलु ऋते कालिदासमेतादृशं समुचितं रसभावभरितमलौकिकमद्भुतं च वर्णनं कर्त्तुं शक्नोति। किमतिपल्लवितेनेत्यलम्।

## भारविः

कोऽयं महाकविः ? कां वसुमतीमसुमतीमकरोत् ? कतमद्वा कुलमनेन स्वजन्मनाऽलङ्कृतम् ? कस्य वाऽवनीनायकस्यायं सभापण्डितः ? का चास्य विषये जनश्रुतिः ? इत्यादिकं सर्वं निश्चेतुं यद्यपि महाकठिनं तथापि किञ्चिद्विलिख्य श्रीमतां मनोविनोदं करिष्याम्येव। अयं महामहिमशाली सकलनीतिनिपुणो राजनीतितत्त्वकोविदः शैवमतावलम्बी कौशिककुमारो नारायणस्वामिनः पुत्रो दामोदर इत्यपरनामधेयो दक्षिणदेशवास्तव्यपल्हवराजस्य सिंहवर्मणस्तथा नरेन्द्रविष्णुवर्धनस्य सभापण्डित आसीदिति शिलालेखादिभिश्च ज्ञायते, यत्सप्तशतकस्य पूर्वभागे षष्ठशतकस्यान्तिमे वाऽयं कविरासीत्। इति बहूनां मतम्। केचित्तु—

**मे मेधावी कविर्विद्वान् भारविः प्रभवं गिराम् ।**
**अनुरुध्याऽकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने ।।**

इत्यस्मिन् श्लोके **'भारवेः'** स्थाने **'भारविम्'** इति पठित्वा नायं भारविर्दामोदरः किन्तु भारवेर्मित्रम् कवेर्दण्डिनश्च प्रपितामहो दामोदर इति कथयन्ति । अस्ति—एतद्विषयेऽपि किम्वदन्तीयं प्रचलिता यत्सकल-शास्त्रपारङ्गतेऽप्येतस्मिन् पिताऽस्य सर्वदा सभायामेनं निर्भर्त्सयति स्म । तेन खिन्नो भारविरेकदा पितुर्मारणाय पितृनिकेतनस्य बहिर्द्वारे समेत्य तत्र शुश्राव स्वसम्बन्धे तयोर्विसम्वादम् । ततः पिता सत्यं हि मद्धितमुद्दिश्यैव मामेवं ताडयतीत्यहो किं कृतं मयेति पापं निश्चिन्वन् पितुरभ्यर्णे समुपेत्य पितृघातरूपस्य महापातकस्य प्रायश्चित्तं परिपृच्छय तत्कथनानुसारेण श्वशुरालये गोचारणरूपं व्रतमकरोत्, ततस्तत्रैकदा धनाशया तत्पत्नी प्रयाता च, ततस्तस्याः कृते कविना **'सहसा विदधीत न क्रियाम्'** इत्यादिकं श्लोकं विरच्योक्तम् । प्रिये ! श्लोकमेनं विक्रीय यथेच्छं ते धनं मिलिष्यतीति सा श्लोकमदाय निर्गता । श्लोकपि केन-चित्-श्रेष्ठिना च क्रीत्वा तस्यै भूरिधनं दत्तम् । स्वयञ्चासौ श्रेष्ठी शयनागारे श्लोकमुट्टङ्कय देशान्तरमगात् । ततः कालान्तरे गृहमागत्य कान्तया सह कञ्चिद् युवानं सुप्तं ददर्श तेन जातक्रोधः पुंश्चलीयमिति मत्वा यदा तन्मारणाय प्रवृत्तः, तदैव श्लोकोपरि दृष्टिर्निपतिता **'सहसा विदधीत न क्रियाम्०'** इति, ततो बुद्धा सा पृष्टा कोऽयं पापिनि ! त्वया सार्धं शेते युवा, सापि देव ! त्वदीयकुमारोऽयं सम्प्रति युवा जात इति व्यजिज्ञपत् । इति श्लोकसार्थक्याय साश्चर्यं मन्वानः तुष्टो धनी ततो भारविमाहूय प्रचुरधनादिना बहुमानपुरस्सरं तं तुतोष । किम्वदन्तीयं सत्या न वेति परं भारवेः पद्यानि नूनमेव सदुपदे-शादिभिर्भरितानि हितप्रदानीत्यत्र न संशेमहे । पाठकानां परिचयाय कानचिदिहापि दीयन्ते, यैः कवेर्नीत्यादिनैपुण्यं हितोपदेशादिकं च सर्वं स्वत एवायाति । यथा—**'वरं विरोधोऽपि समं महात्मभिः' 'न वञ्च-नीयाः प्रभवोऽनुजीविभिः' 'हितं मनोहारि च दुर्लभं वचः' 'विश्वास-यत्याशु सतां हि योगः' 'सुदुर्लभाः सर्वमनोरमा गिरः' 'गुणाः प्रियत्वेऽ-**

धिकृता न संस्तवः'। किं बहूक्त्या सर्वमेव काव्यं भारवेर्मनोरमम् ॥ किरातेऽत्र प्रधानरसो वीरः शृङ्गारादयोऽङ्गरसाः। भारविविषये मल्लिनाथस्येदं कीदृशं सुन्दरं कथनम्, यथा—

नेता मध्यमपाण्डवो भगवतो नारायणस्यांशज-
स्तस्योत्कर्षकृतेऽनुवर्ण्यचरितो दिव्यः किरातः पुनः।
शृङ्गारादिरसोऽयमत्र विजयी वीरप्रधानो रसः
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम् ॥ १ ॥

## भारवेरर्थगौरवम्

उक्तेश्चास्या अयमेवाशयो यदर्थगरिम्णि भारविरन्यान्कवीन् सर्वथाप्यतिशेते। न चैतेन कालिदासप्रभृतिष्वर्थगरिमा नास्तीति प्रत्येतव्यम् ! किन्त्वत्रास्य विशिष्टोऽधिकारः। यथा कविकुलगुरोरुपमायाम्, नैषधकर्त्तुश्च पदलालित्ये—इति। साम्प्रतं समुत्पद्यते—इयं जिज्ञासा, यत्कोऽयमर्थगरिमा यदर्थं भारवेः प्रभूता प्रसिद्धिरित्युच्यते–आपातकठिनेषु पदेषु सुमधुरभावार्थसमूहसन्निवेशमेवार्थगरिमेति प्रतिभाति। तथा हि—

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥'

श्लोकेऽत्र कीदृशः सहृद्यो धृत्युपेतो विवेकपथनेता मृत्य्वपनेता जीवद्वयधर्त्ताऽमर्षप्रहर्ता कुशलकर्ता चिरेण प्रख्यातः, प्राप्तादरोऽनल्पमूल्यश्च, अर्थगौरवपरीतं पद्यम्। अपि च—

'य करोति वधोदर्कानिःश्रेयसकरी क्रियाः।
ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥'

द्वात्रिंशदक्षरपरिमते प्रगाढबन्धसमुज्ज्वलेऽस्मिन् पद्ये किं हि समयोपयुक्तं नोक्तं कविना, के के वा सुमधुरा भावा नाभिव्यक्तिं नीताः, कः खलु ऋते भारविमेतादृशीरर्थभारभरिता उक्तीः प्रकटयितुं प्रभवेत्।

## भवभूतिः

अस्य पिता नीलकण्ठः, माता च जातुकर्णी विदर्भराज्ये पद्मपुरेऽयं

कविरासीत् । पण्डितप्रकाण्डो यजुर्वेदी चायम् । अस्यापरनाम श्रीकण्ठोऽप्यासीत् । अयं कश्यपगोत्रीयः कुमारिलस्य शिष्यश्चासीत् । सरसकथावस्तुसंघटने कवीनन्यानत्येति । तत्रापि करुणरससमावेशोऽस्यानतितरं साधारण्यं सामर्थ्यम् । एतत्कृत उत्तररामचरिते **'एको रसः करुण एवे'**त्यादिना श्लोकेन प्रतीयते । स्वयमेवास्य वश्यवाक्त्वं **'यं ब्रह्माणमियं देवी'** **'ऋषीणां पुनराद्यानाम्'** इत्यादिना ज्ञायते । **'नव इव रघुवंशस्याप्रसिद्धप्ररोहः'** इत्यनेन रघुवंशादपि श्रेष्ठं मदीयमुत्तररामचरितं निवेदयति स्वयं कवि । अस्य गूढव्यङ्ग्यत्वं प्रसिद्धम् । अयं बाल्येऽनधीतविद्यो ग्रामवीथिष्वितस्ततः पर्यटन् किञ्चित्कालं यापयित्वा पश्चाद् बुधवरोऽजनि । कान्यकुब्जस्य यशोधर्मणः सभायामयमासीत् अत एव भवभूतेः कालः सप्तमशतकस्यान्तिमभागो वा अष्टमाग्रिमभागो वा स्यात् । अनेन रचिता ग्रन्थाः—महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितम् । प्रथमे वीररसस्य, द्वितीये शृङ्गाररसस्य, तृतीये करुणरसस्य प्राधान्यम् । प्रथमे वर्णनांशे रामायणात्क्वचिद् भेदो दृश्यते, द्वितीये मालतीमाधवे नायिकानायकौ कल्पितौ, अत एवैतत्प्रकरणम्[1] ।

कालिदासस्तु संग्रहेण व्यङ्ग्यात्मना च निर्वक्ति काव्यतत्त्वानि । अयं च विस्तरेण वाच्यतया च निर्माति काव्यवस्तु । अस्य शब्द माधुर्यं मधुपर्कप्रदानादि बहुत्र दृश्यते तच्च श्रोत्रियानुकरणम् । भव भूतिग्रन्थे विदूषको नास्ति, मालविकाग्निमित्रानुकरणार्थं मालतीमाध शृङ्गाररसप्रधानकं कृतम् । कथासरित्सागरमुपजीव्य मालतीमाध कृतं तेन । नवमाङ्के च विक्रमोर्वशीयचतुर्थाङ्कस्यानुकरणमेवं त माधवस्य मेघदूतनिर्माणकरणं मेघदूतस्यैवानुकरणं प्रतिभाति । अस् शिखरिणीवृत्तं प्रशस्यतरं वर्तते । मालतीमाधवनामैतत्प्रकरणम् अष्टपदा चात्र नान्दी । धीरप्रशान्तोऽत्र माधवो नायकः । अन्यदीय कन्या मालती नायिका । मालाद्यवलोकनानि उद्दीपनविभावाः परस्परालापचक्षुःक्रियानुभावाः । निर्वेदादयो व्यभिचारिणः । रति

---

१. भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोऽङ्गी नायकस् विप्रोऽमात्योऽथवा वणिक् ॥ इति प्रकरणलक्षणम् ।

स्थायी। सम्भोगश्रृङ्गारोऽङ्गी। भयानकबीभत्सादयोऽङ्गरसाः। मकरन्दाद्याः सहायाः। रीतिः पाञ्चाली। ओजो गुणः। प्रस्तावना प्रयोगातिशयाख्या 'यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते। तेन पात्रप्रवेशश्चेत्'। अस्य प्रथमाङ्के—कामन्दक्यवलोकितयोर्वार्तालापानन्तरं कलहंसस्योद्यानप्रवेशः, तत्र माधवमकरन्दाभ्यां सह मालतीविषयकः संलापः द्वितीये माधवगुम्फितवकुलमालाया मालत्यै दानम्। तत्समीपे कामन्दक्या आगमनम्। तृतीये माधवस्य मालतीपर्य्यवेक्षणमेवं शार्दूलाक्रान्तमदयन्तिकाया मकरन्देन रक्षणम्। चतुर्थे माधवस्य मकरन्दविचेतनतया संज्ञाभावः। मालतीमाधवयोर्विवाहनैराश्यम्, मकरन्दमदयन्तिकयोश्च प्रणयाभिव्यक्तिः। पञ्चमे कपालकुण्डलया मालतीहरणं माधवेन तस्या रक्षणमघोरघण्टमारणञ्च। षष्ठे च लवङ्गिकाभ्रमेण मालत्या माधवालिङ्गनं मालतीवेषधारिणो मकरन्दस्य नन्दनेन विवाहः। सप्तमे मकरन्देन मदयन्तिकायै आत्मनः प्रकाशस्तथा तस्मै समर्पणम्। अष्टमे मालतीमाधवावलोकितानां समागमः। रक्षितपुरुषैर्मकरन्दस्याक्रमणं तेन कलहंससार्धं माधवप्रस्थानमेतद्विज्ञापयितुं कामन्दकीसमीपे अवलोकितालवङ्गिकाबुद्धरक्षितानामागमनं मालतीसार्धं कपालकुण्डलायाः श्रीपर्वतगमनं मदयन्तिकादीनां मालत्या अन्वेषणञ्च। नवमे मालतीवियुक्तस्य माधवस्य पुनः पुनरचेतनत्वं तेन मकरन्दस्य विलापः, माधवप्रदत्ताया वकुलमालायाः पुनः माधवाय प्रदानं तेन सह सौदामिन्या आगमनम्। दशमे मालत्यर्थं परस्परमाक्षेपोक्तिः, मालत्या सह माधवस्योपस्थितिः, सौदामिन्या आगमनं, मालतीपरिणयादिकं च वर्णितम्।

## कालिदासभवभूती

(तयोस्तुलनासङ्कलनम्)

'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका, सार्थवती बभूव॥
सुकविद्वितयं मन्ये निखिलेऽपि महीतले।
भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः॥'

इति श्लोकद्वयेन तयोर्महाकवित्वं स्थापितमिति। विशिष्टया रचनया च भवभूतिरेवाद्वितीयः कालिदासस्य तुलनां कर्तुं समर्थः। तथाहि—

कालिदासस्य सर्वमपि वाक्यं प्रायः लक्ष्यव्यङ्ग्यार्थयोर्बोधकं वर्तते।

कालिदासस्य रचनायाः लक्ष्यव्यङ्ग्यार्थपरकत्वं भवभूतेश्च वाच्यार्थपरकत्वम्।

यथा शकुन्तलामवलोक्य दुष्यन्तः **'अये लब्धं नेत्रनिर्वाणम्'** अत्र नेत्रनिर्वाणजन्यरसास्वादो वाचकसामाजिकानुभवगम्यः। भवभूतेस्तु पद्येऽनुभवोऽपि वाच्यत्वेन स्वष्टतया सहृदयानां तादृग् हृदयङ्गमः। यथा मालतीविषये माधवः—

**अविरलमिव दाम्ना पौण्डरीकेण नद्धः**
**स्नपित इव च दुग्धस्रोतसा निर्भरेण।**
**कवलित इव कृत्स्नश्चक्षुषास्फारितेन,**
**प्रसभममृतमेघेनेव सान्द्रेण सिक्तः॥'**

अत्र चक्षुर्दर्शनजन्यानुभवस्य कविनैव स्पष्टशब्दैर्वर्णनाद्वाच्यतया तादृक् सामाजिकानुभवगम्यत्वम्।

कालिदासस्योपमया वैशिष्ट्यं, नायिकानामङ्गवर्णनबाहुल्यम्। भवभूतेश्च तासां गुणवर्णनबाहुल्यम्।

उपमाविषये 'उपमा कालिदासस्ये'ति विदुषां सदुक्तिसुसंगतैव। यथा हि—

**'इदमुपहितसूत्रग्रन्थिना स्कन्धदेशे**
**स्तनयुगपरिणाहाच्छादिना वल्कलेन।**
**वपुरभिनवमस्याः पुष्यति स्वां न शोभां**
**कुसुममिव पिनद्धं पाण्डुपत्रोदरेण॥'**

अत्र शकुन्तलावर्णने उपमानोपमेययोरनुरूपं साम्यं स्वाभाविकत्वञ्च प्रतीयते। कालिदासस्तदितरेऽपि कवयो नायिकावर्णनप्रस्तावे तासां वक्षोजप्रभृतीन्यङ्गानि वर्णयन्ति। कालिदासो यथा शकुन्तलाविषये—'तुङ्गस्तनी' 'श्रोणीभारादलसगमना' 'विम्बाधरा' परन्तु भवभूतिस्तु तासां गुणवर्णन एव विहितमतिः स्वात्मानं सिद्धमनोरथं मन्यते। यथा सीताविषये 'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोः,' 'एतानि तानि वचनानि सरोरुहाक्ष्याः,' 'कर्णामृतानि मनसश्च रसाय-

नानि,' 'सञ्जीवनोषधिरसो नु हृदि प्रसिक्तः,' 'विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति'। अत्र हि विचार्यमाणे निजोपमाया अनुपमतया नारीरूपवर्णने कविकुलशिरोमणिः कालिदासः सफलो बभूव। तथापि भवभूतिरत्र पृष्ठगो न वक्तुं शक्यते। तस्य तु असाधारणं रचनायां कौशलम्। नायिकायाः पादप्रभृतीनामङ्गानां वर्णनं परित्यज्यादर्शभूतान् गुणानेवासौ स्ववर्णनीय-विषयाञ्चकार। एतद्वर्णनविषये भवभूतिः श्रेष्ठतरः। उभयोरपि स्वस्वपूर्वोक्तविषये सहृदयहृदयङ्गमं वर्णन-कौशलम्।

नरसौन्दर्य-वर्णने भवभूतेः प्राधान्यं, कालिदासस्य च न्यूनत्वम्।

परञ्च पुरुषरूपवर्णने भवभूतेः प्राधान्यं दृश्यते। यथा—सीता चित्रे राममवलोक्य,

**'अहो दलन्नवनीलोत्पलश्यामल-स्निग्धमसृणशोभमानमांसलेन देहेन सौभाग्यविस्मयस्तिमिततात-दृश्यमानसौम्यसुन्दर–श्रीरनादरखंडितशङ्करशरासनः शिखण्डमुग्ध-मुखमण्डल आर्यपुत्र आलिखितः'।**

कालिदासो यथा दुष्यन्तस्य शरीरं वर्णयति—

**'अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा,**
**रविकिरण-सहिष्णुः स्वेदलेशैरभिन्नः।**
**अपचितमपि गात्रं व्यायतत्वादलक्ष्यं,**
**गिरिचर इव नागः प्राणसारं बिभर्ति॥'**

अत्रोभयत्रापि पुरुषसौन्दर्यवर्णने पूर्वत्र यथा सामाजिकानां रामविषयकरत्याश्रयीभूतसीताभिन्नानां रसानुभवो न तादृगुत्तरपद्येऽनुभूयते।

शिशु-वर्णनेऽपि कालिदासापेक्षया भवभूतेर्न न्यूनत्वम्।

शिशु-वर्णनेपि भवभूतिर्विशिष्ट एव, यथा कुशमवलोक्य रामः—

**'अथ कोऽयमिन्द्रमणि-मेचकच्छवि-**
**र्ध्वनिनैव दत्तपुलकं करोति माम्।**
**नवनीलनीरधरधीरगर्जित-**
**क्षणबद्धकुड्मलकदम्बडम्बरम्॥**

कालिदासो यथा, दुष्यन्तो निजतनयं विलोक्य—

**'आलक्ष्यदन्तमुकुलाननिमित्तहासै-**
**रव्यक्त-वर्णरमणीय-वचःप्रवृत्तीन् ।**
**अङ्काश्रयप्रणयिनस्तनयान्वहन्तो**
**धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥'**

अत्रोभयत्रापि पुत्रयोरपरिचये समानेऽपि 'ध्वनिनैव दत्तपुलकम्' इति वर्णनेन पूर्वत्र वात्सल्य? रसानुभवः प्रतीयते । अपरत्र 'धन्याः' इति पदेन दुष्यन्तस्यौदासीन्य-प्रतीत्या न वात्सल्य-रसानुभवः । नाटक-दृष्टचा तु दुष्यन्तदशानुसारि रम्यं वर्णन-कौशलमुत्तरत्र पद्ये ।

मृगाश्वादीनां वर्णने कालिदासस्य श्रेष्ठत्वं भवभूतेश्च न्यूनत्वम्

मृगादीनां स्वभावोक्त्या वर्णने कविकुलावतंसः कालिदासः सिद्धहस्त इति विदितचरम् । यथा—

**'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः**
**पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ॥**
**दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**
**पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'**

अश्ववर्णनं यथा—

**'मुक्तेषु रश्मिषु निरायतपूर्वकाया,**
**निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।**
**आत्मोद्धतैरपि रजोभिरलङ्घनीया,**
**धावन्त्यमी मृगजवाक्षमयेव रथ्याः ।'**

निजरचना-निराकृत-कविलोको भवभूतिस्त्वत्र वर्णने निरुद्धमार्ग इव प्रतीयते । यथा—

**'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं,**
**दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।**
**शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्,**
**किं वा ख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥'**

तथाप्यस्य पद्यस्य कविनिबद्धबालकप्रौढोक्तिसिद्धस्य नाटकदृष्टया तु नास्त्यशोभनत्वम् ।

तत्तद्वस्तुवर्णन उभयोरप्यनुकूलपदन्यासेन वैशिष्टयम्

कालिदासस्य शकुन्तलाकोमलाङ्गवर्णने कोमलपदानामेव न्यासः । अत्र हि भाषासौन्दर्यं भावमनुसरति । यथा—

'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ।।'

भवभूतेः रचनाया नदीवर्णने प्रवाहानुकूल-पदन्यासतया श्लोकपाठकस्य मुखेनैव प्रवाहो निःसरतीव यथा—

'एते ते कुहरेषु गद्गदनदद्गोदावरीवारयः'

कविद्वयस्यानुरूपा उक्तयः

अन्याश्चात्र कविद्वयस्य मिथोऽनुरूपा उक्तयो लिख्यन्ते—

कालिदासस्य—

स्वजनस्य हि दुःखमग्रतो विवृतद्वारभिवोपजायते

भवभूतेः—

सन्तानवाहीन्यपि मानुषाणां, दुःखानि सद्बन्धु-वियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि, स्रोतःसहस्रैरिव सम्प्लवन्ते ।।

कालिदासस्य—

शमप्रधानेषु तपोधनेषु, गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्यकान्तास्तदन्यतेजोऽभिभवाज्ज्वलन्ति ।।

भवभूतेः—

न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।
मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ।

कालिदासस्य—

वसने परिधूसरे वसाना, नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला, मम दीर्घं विरहव्रतं बिभर्ति ।।

भवभूतेः—

**परिपाण्डुदुर्बलकपोलसुन्दरं, दधती विलोलकबरीकमाननम् ।**
**करुणस्य मूर्तिरथवा शरीरिणी ? विरहव्यथेव वनमेति जानकी ।।**

कालिदासो हि अल्पेषु शब्देषु यं विशिष्टं भावं व्यनक्ति, तमेव भवभूतिर्विस्तार्य बहुषु वर्णेषु प्रतिपादयतीत्येतदपि पूर्वोक्ताभिरुक्तिभिर्व्यक्तमेव ।

एवं साधारणतयापि उभयोरपि काव्योः रचनाऽध्ययने कालिदासस्य रचनायां हास्यरसाविर्भावोऽपि श्रेष्ठतरः । स चाभिज्ञानशाकुन्तले सखीषु मध्ये माधव्ये च साक्षादनुभूयते । उत्तरे रामचरिते तु सीतामुखेनोर्मिलामुद्दिश्य चित्रदर्शनसमय एकदैव वर्णितो हासः । परन्तु गम्भीरतया विशिष्ट-कोटिगत इव लक्ष्यते । यादृशी वीररसस्य प्रसूतिर्भवभूतेः रचनायां, तादृशी कालिदासस्य कृतौ न वर्तते । यादृशी च शृङ्गाररसे सिद्धहस्तताऽभिज्ञानशाकुन्तल-प्रणेतुस्तादृशी नास्त्युत्तररामचरितस्य रचयितुः, परं वर्णनीयार्थस्यातिस्पष्टतया प्रतिपादनाद् व्यङ्ग्यार्थानां वाच्यायमानत्वम् ।

**'भवभूतेस्तु सम्बन्धाद् भूधरभूरेव भारती भाति ।**
**एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ।।'**

इत्येषोक्तिर्भवभूतिविषये प्रसिद्धा, तथापि तद्रचिते उत्तररामचरिते विलापमात्रस्यैव प्राधान्येन करुणरसस्य न तादृक् चमत्कारजनकत्वं, यतो विलापमात्रेण कारुण्यस्य साधारणैरपि कर्तुं शक्यत्वात्, स एव करुणो रसः सहृदयानां प्रीतिमावहति । यत्र कर्तव्यस्नेहयोः, शोकधैर्ययोः, आनन्दवेदनयोरन्योऽन्यमिश्रणेनात्मन्यानन्दातिशय उत्पद्यते । कालिदासस्य शृङ्गारकाव्यरचनाप्राधान्यसत्त्वेऽपि करुणेऽपि न किञ्चिन्न्यूनत्वम् । यतः—

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,**
**अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम् ।**
**वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः**
**पीडयन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ।।**

इत्यादिश्लोके करुणरसोऽनुभूयते। अयं श्लोकः प्रसिद्धेषु चतुर्षु मध्येऽन्यतम इति प्राग्दर्शितमपि तैरेव श्लोकैः कालिदासस्य विशिष्टं प्राधान्यं समजनि, उभयोरपि कव्योर्विषये प्राचीनानामेवं सम्मतिः, यथा—

**काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला।**
**तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्॥**

तथापि—

**नाटकेषु वयं श्रेष्ठा वयं वा वयमेव वा।**
**उत्तरे रामचरिते भवभूतिर्विशिष्यते॥**

अनया दिशाऽन्यत्राऽपि छात्रवरैर्मिथोनुरूपा तुलना स्वयं कार्या। एतदर्थमेव संकलितोऽयं लेखोऽत्रेति विरम्यते।

## शूद्रककविः

कदाऽयं कविरासीत् कं देशं स्वजन्मनाऽलञ्चकार चैतत्सर्वमद्यावधि न निर्णीतम्। कथयन्ति च बहवो विद्वांसो यदयं हि कविरतिप्राचीनः खीष्टस्य जन्मकालात् ३०० वर्षाणि प्राग् बभूव। अपरेषां मतौ तु षष्ठ-शताब्दौ प्रादुरभूदिति। कविरयं ऋग्वेद, सामवेद, गणित, गायन, वादन, कलादिषु महाप्रवीणो महादेवोपासकश्चासीत्। अनेन चान्तेऽश्वमेधयज्ञं कृत्वा दशदिवसोत्तरशतवर्षम्[1] आयुःशेषप्रमाणं व्यतीत्य च परलोकगमनमकारि। इत्यनेनैतदपि ज्ञायते यत्केनचित्कविना नाटक-मिदं विरचय्य स्वसंरक्षकाय राज्ञे शूद्रकाय समर्पितम्। दाक्षिणात्योऽयं कविः। कादम्बर्यां तु शूद्रकस्य राजधानी विदिशायां प्रदर्शितेति विदिशा

१. ऋग्वेदं सामवेदं गणितमथ कलां वैशिकीं हस्तिशिक्षां,
ज्ञात्वा शर्वप्रसादाद् व्यपगततिमिरे चक्षुषी चोपलभ्य।
राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा,
लब्ध्वा चायुःशताब्दं दिनदशसहितं शूद्रकोऽग्निं प्रविष्टः॥
समरव्यसनी प्रमादशून्य ककुदं वेदविदां तपोधनश्च।
परवारणबाहुयुद्धलुब्धः क्षितिपालः किल शूद्रको बभूव॥

सन्निकृष्टवास्तव्योऽयं ज्ञायते। भासप्रणीतं चारुदत्तनाटकमुपजीव्य[1] मृच्छकटिकं हि नाम प्रकरणं लिखितञ्चैतन्महीपेन शूद्रकेण। अत्र विदूषको नास्ति, मैत्रेय एव विदूषकः, सूत्रधारस्य वाक्यार्थमादायैव मैत्रेयस्य प्रवेश इत्यधिगमात्। अष्टपदा च नान्दी। धीरप्रशान्तश्चारुदत्तोऽत्र नायकः, अनुरक्ता गणिका वसन्तसेना स्वकीया मध्या धूर्ता नायिका च, वर्षासमयवर्णनादय उद्दीपनविभावाः, परस्परालापादयोऽनुभावाः, निर्वेदादयो व्यभिचारिणः रतिः, स्थायी, सम्भोगश्शृङ्गारोऽङ्गी, करुणहास्यादयोऽङ्गरसाः, चेटविदूषकादयः सहायाः, रीतिः वैदर्भी, गुणो माधुर्यं, प्रस्तावना कथोदधातरूपा। अस्य प्रथमेऽङ्के चारुदत्तस्य निर्धनतया खेदः, वसन्तसेनाप्राप्त्यर्थं शकारस्य यत्नः। शकारमनभिलषन्त्याश्चारुदत्तानुरक्तायाश्च वसन्तसेनायाश्चारुदत्तगृहप्रवेशः, तत्राभरणन्यासश्च। द्वितीये द्यूतकरणं बहुच्छलं क्रीडितपणादानप्रकारः कर्णपूरकागमनमेवं वसन्तसेनायाश्चारुदत्तानुरागप्रकाशः। तृतीये चारुदत्तगृहे शर्विलकेन सन्धिखननं न्यासीकृतालङ्काराणञ्च चौर्यम्। चतुर्थे मैत्रेयस्य वसन्तसेनाया गृहे आगमनं मदनिकाशर्विलकयोः समागमः, अलङ्कारप्राप्तिश्च। पञ्चमे दुर्दिनवर्णनानन्तरं चारुदत्तवसन्तसेनासमागमः। षष्ठे च आर्यकस्य रथविपर्यासेन चारुदत्तान्तिकगमनम्। सप्तमे चारुदत्तार्यकसंवादः। अष्टमे यानविपर्ययेण वसन्तसेनाया उद्यानप्राप्तिः, तत्र वसन्तसेनामोषणञ्च। नवमे वसन्तसेना चारुदत्तेन हतेति शकारेण मिथ्याव्यवहारप्रसारस्तद्विचारश्च। दशमे तु शूलारोपणाय चारुदत्तस्य श्मशानभूमावागमनं तत्र तद्बान्धवानां खेदोक्तिः, वसन्तसेनासमागमः, आर्य-

---

१. मृदा निर्मिता शकटिका क्षुद्रशकटं यत्रेति मृच्छकटिकम्—'अत इनिठनौ' इति ठन् इति तन्नामकरणहेतुः भवेत्प्रकरणे वृत्तं॰ नायिका कुलजा क्वापि वेश्या क्वापि क्वचिद्द्वयमिति पूर्वोक्तं प्रकरणलक्षणम्। कथोद्घातरूपप्रस्तावना यथा—सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा। भवेत्पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते॥ अन्तःपुरचरो विप्रो वृद्धो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥

कस्य राज्याधिगतिः सदारापत्यस्य तावद् व्यसनविपर्ययः, शकार-निर्यातनमेवं चारुदत्तस्यापराधमर्षणञ्चेति मृच्छकटिके—दारिद्र्ये कथं धैर्यं, सदसि वाक्पटुतादिकञ्च सर्वमेव वर्णितमस्ति तस्य पठनेनास्माकं महानुपकारो बोभवीति। दारिद्र्यग्रस्तः पुरुषः केन प्रकारेण—इह संसारे दुःखमनुभवति कथञ्च जनैरुपहस्यते कथं वा समाजे कलङ्कितो भवति कथं वा मनुष्या निर्दोषमपि तं दूषयन्ति—इत्यादिकं सम्यक् वर्णितम्। सर्वैः सत्येऽवस्थातव्यमित्यपि सर्वप्रधानतया प्रदर्शितम्। सत्येनैव जय—इति चारुदत्तचरित्रावगमनेन ज्ञायते किमन्यत्। वर्षावर्णनमपीह सर्वोत्तरम्। ननु **'नायिकानायकाख्यानां संज्ञाप्रकरणादिषु'** इति नियमेन यथा मालतीमाधवादीनि लिखितानि तथैव वसन्तसेनाचारुदत्तोपाख्यानस्य मृच्छकटिकमिति संज्ञा कथमिति विचारणे—एतदेव ज्ञेयं यत्प्रकरणान्तवर्तिनो यस्य कस्यचिदपि वस्तुनः प्राबल्यात् ग्रन्थस्य नाम विधेयमतोऽत्र मृन्निर्मितायाः शकटिकाया एव प्राबल्यमतस्तेनैव नाम्ना प्रकरणस्यास्य नाम निर्देश इति।

अत्र सत्स्वपि सर्वेष्वलङ्कारेषु दोषप्राबल्यमपि नाल्पतरं परञ्च तत्र तत्र शकारस्योक्तित्वाद् गुणत्वमेव भजते। यतो हि यथा—**'मम मदनमनङ्गं मन्मथं वर्धयन्ती'**त्यादौ सत्यमप्रतीत्वग्राम्यत्वकष्टत्वनिरर्थकादयो दोषाः सन्ति परञ्च ते मूर्खस्य शकारस्य वचने यदाऽऽपतितास्तदैव दोषा अपि गुणा एव संवृत्ताः। तदुक्तमपि—**'आगमलिङ्गविहीनं देशकलान्यायविपरीतम्। व्यर्थैकान्तमपार्थं भवति हि वचनं शकारस्य॥'** इति तल्लक्षणस्वीकाराच्चेत्यलम्। अत्र बहुस्थलेषु प्राकृतभाष्यपि संस्कृतभाषणमकरोत्। इति तत्समाधानमपि दर्पणत इत्थं यत्—**'उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित्। योषित्सखीबालवेश्याकितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरा०'**॥ इति।

## माघः

अयं महाकविर्माघो गुर्जरप्रान्तान्तर्गतमालवाप्रदेशवास्तव्य आसीत्। अस्य पितामहश्च सुप्रभवदेवः पिता च दत्तकः, माता ब्राह्मी पितृव्यश्च

शुभङ्कर आसीत्। अस्य कुलश्चानस्तमितोदर्कं धनदोपमं समृद्धं चाभवत्। अस्य जन्मकालेऽस्य पिता दत्तको जातकर्म्मादि संस्कारं सर्वं विधिवत्सम्पाद्य दैवज्ञकथनानुसारेण च प्रौढ़वयसि निःस्वनोऽयं भवितेत्येनं संस्मृत्य तद्रक्षायै सुदृढ़मञ्जूषादिभाण्डानि नानाविधैरमूल्यहीरकादिभिः पूरयित्वा—एकस्मिन् अन्तःपुरीयप्रासादे भूमिं खनित्वाऽस्थापयत्। एवं प्रवहति कालचक्रे—आयुःपूर्णतया दत्तकः पुरन्दरपुरातिथिरभवत्। ततो देशाटनपटुश्चायं भुवं भ्रमन् कस्यापि राज्ञः सभासदत्वन्नालभत। प्रबन्धचिन्तामणि भोजप्रबन्धञ्चावलोक्य तु ज्ञायते भोजकालीनोऽयं महाकविः। महाराजो भोजोऽस्य विद्वत्तया सम्यक् परिचित आसीदिति। यतो हि भोजप्रबन्धे लिखितमस्ति यदेकदा गृहागतानां याचकानां कृते स्वसकाशे पणकमेकमप्यनवलोक्य श्लोकमेकञ्च निर्माय स्वपत्नीं प्रति प्राह। प्रिये, श्लोकमादाय भोजपार्श्वे याहीति। ततः सा प्रस्थिता बहिर्द्वारि समेत्य द्वारपालं निजगाद। भोजदर्शनलालसया समेताऽहं याचे तद्दर्शनमिति। द्वाःस्थोऽपि प्रणम्य राजानं प्राह—देव ! गुर्जरदेशादागत्य माघपत्नी बहिर्द्वारि तिष्ठति। राजा 'प्रवेशय' इत्याज्ञापयामास। ततः सा प्रविश्य राज्ञे पतिप्रदत्तं पत्रं प्रयच्छति। राजा तदादाय वाचयति—

**'कुमुदवनमपश्रि श्रीमदम्भोजषण्डं**
**त्यजति मुदमूलूकः प्रीतिमाँश्चक्रवाकः।**
**उदयमहिमरश्मिर्याति शीतांशुरस्तं**
**हतविधिलसितानां ही विचित्रो विपाकः॥'**

राजा तदद्भुतगुणं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा प्राह–मातः इदं भोजनाय दीयते, प्रातरहं माघपण्डितं नमस्कर्त्तुमागमिष्यामि। ततः सा तदादाय मार्गे याचकव्रातात्स्वभर्त्तुः शारदचन्द्रकिरणगौरान् गुणान् श्रुत्वा तेभ्य एव निखिलमपि भोजदत्तं धनं दत्तवती। दत्त्वा च पतिं प्राह—मार्गे आयान्त्या याचकमुखेभ्यो लोकोत्तरांस्तांस्तव गुणान् श्रुत्वा सर्वमेव वित्तं तेभ्यो दत्तम्। तदाकर्ण्य माघः प्राह देवि ! साधु कृतं त्वया। परमन्ये याचका आयान्ति तेभ्यः किं दातव्यम्। ततो माघपण्डितं वस्त्रावशेषं विदित्वा कोऽप्यर्थी प्राह—

आश्वास्य पर्वतकुलं तपनोष्णतप्त—
मुद्दामदावविधुराणि च काननानि ।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः ॥'

ततो माघः स्वपत्नीं प्राह—

'अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागान्न सङ्कुचति दुर्ललितं मनो मे ।
यच्ञा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं नु विलम्बितेन ॥'

ततो माघपत्नी स्वामिनि परलोकं प्राप्ते प्राह—

सेवन्ते स्म गृहं यस्य दासवद् भूभुजः पुरा ।
हाद्य भार्यासहायोऽयं मृतो वै माघपण्डितः ॥'

ततो विपन्नं माघं विदित्वा भोजराजः सभार्यस्य माघस्योत्तरक्रियां पुत्र इव चक्रे । अतो विज्ञायते भोजकालीनो माघः षष्ठशताब्दिमारभ्य सप्तमशताब्देरुत्तरभागपर्यन्तं कस्मिंश्चित्समये चाऽयमासीदिति बहूनां मतम् । ध्वन्यालोके **'रम्या इति प्राप्तवती पताका'** इत्युदाहरणप्रदर्शनेन केचन नवमशताब्दिपूर्वभागादारभ्य दशमशताब्दिपूर्वभागपर्यन्तमेव माघः प्रादुर्बभूवेति मन्यन्ते । यद्यपि शिशुपालवधमेव विषयीकृत्य ग्रन्थोऽयं माघकविना लिखितः तथापि **'कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वेति'** लक्षणादस्य प्रणेतुः श्रीमाघस्य नाम्ना माघः शिशुपालवधमिति च संज्ञा जाता । भारविकृतं किरातार्जुनीयं नाम काव्यमिदं सर्वथाऽनुकरोति । महाभारतकथामुपजीव्यैतल्लिखितं महाकविना । अस्य नायकः श्रीकृष्णः धीरोदात्तः, प्रतिनायकश्च[1] धीरोद्धतश्चैद्यः । यस्याऽवसाद एवास्मिन् महाकाव्ये[2] अपेक्षितं फलम् । वीरो रसः प्रधानः शृङ्गा-

१. प्रतिनायकलक्षणं यथा—धीरोद्धतः पापकारी व्यसनी प्रतिनायकः ।

२. सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः । सद्वंशः क्षत्रियो वापि धीरोदात्तो गुणान्वितः । एकवंशभवा भूपाः कुलजा बहवोऽपि वा । शृंगारवीरशान्तानामेकोऽङ्गी रस इष्यते । अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः । इतिहासोद्भवं

रादयोऽस्याङ्गानि दूतवाक्यानि । शिशुपालवाक्यानि चोद्दीपनविभावाः, धृत्यादयो व्यभिचारिणः, उत्साहः स्थायी, गौड़ी रीतिः, ओजो गुणः, शिशुपालप्रेरितो दूतो निसृष्टार्थः ।[1]

## श्रीकृष्णं प्रति बलरामस्योक्तिः

कृष्ण ! यत्त्वयाऽधुनोक्तं तदर्थमस्माभिर्यतनीयम् । मूर्खा अपि षड्-गुणाः, तिस्रश्च शक्तयः सिद्धयश्चोदयास्त्रय इति कथयितुं शक्नुवन्ति । इह संसारे यः खलु स्वल्पेनैव धनेनात्मानं तोषयति तस्य दैवोऽपि धनं न वर्धयति । ये च पुनः मानाभिमानिनस्ते सर्वे सर्वानिव स्वशत्रून् उन्मूलयन्ति । यतो विपक्षमध्ये—एकस्मिन्नपि स्थिते कस्यचिदपि जनस्य विजयो न भवति । कार्ये समुपागते हि मित्रामित्रयोः परिचयो जायते । उपकारिणा वैरिणा सन्धिः, अपकारिणा मित्रेण च विरोधः कर्तव्यः । शिशुपालोऽपि रुक्मणीं हरता भवता सह बद्धवैरः । भौमं जेतुं त्वयि गते स इमां पुरीमरौत्सीत् । अतः सामर्षेणैतादृशेन शत्रुणा सह विरोधे कृते नोचितमौदासीन्यम् । पादाहतं यदुत्थाय मूर्धानमधिरोहतीति विद्विषां मूर्धसु पादमकृत्वा यशः खलु दुर्लभम् । उच्छृङ्खलेन सह शान्तचित्तस्य सङ्गतिरतीव विषमेति यानं कार्यम् ।

---

वृत्तं अन्यद्वा सज्जनाश्रयम् । चत्वारस्तस्य वर्गाः स्युस्तेष्वेकश्च फलं भवेत् । आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा । क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्तनम् । एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः । सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् । तत्र वृत्तमयः क्वापि सर्गः कश्चन दृश्यते । कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा । नामास्य सर्गोपादेयकथया सर्गनाम तु ।। इति महाकाव्यलक्षणम् ।

१. निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः । कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः । निसृष्टार्थः यथा—उभयोर्भावमुन्नीय स्वयं वदति चोत्तरी । सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ।। अन्ये तु यथा—मितार्थभाषी कार्यस्य सिद्धिकारी मितार्थकः । यावद्भाषितसन्देशहारः सन्देशहारकः ।। इति सर्वलक्षणम् ।

## उद्धवस्योक्तिः

कृष्ण ! स्वामी प्रज्ञोत्साहौ आत्मनि—आधातुं यतेत । यतः विजिगिषोरात्मसम्पदः मूलम् । अज्ञा अल्पमेवारभन्ते निकामं व्यग्राश्च भवन्ति । पण्डिता निराकुला महारम्भास्तिष्ठन्ति । राजानो बुद्धिशस्त्रा —'प्रकृत्यङ्गा घनसम्वृत्तिकञ्चुकाश्चारेक्षणा दूतमुखा—पुरुषाः सन्ति । नृपेषु मात्रं तेजः क्षमा वा नोचिता । मृदुतया युक्तं तेज एव समीचीनम् । प्रभावशालिनां राज्ञां सर्वे अन्येऽपि राजानः सहायका भवन्ति । शिशुपाल एकाकीति शीघ्रमेव जय्य इति न विचारणीयम् । यतो बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति । अतः शिशुपालो भवता न क्षम्यः । देवानां प्रीत्यर्थमरिवधः कार्यः । परं पूर्वं युधिष्ठिरयज्ञनिमन्त्रणमेव स्वीकार्यं ततस्तत्राऽरिवध इति मे मतम् ।

## द्वारकावर्णनम्

यदा कृष्णो द्वारकातो निर्जगाम तदा जनसमूहः दर्शनाभिलाषयाऽऽगतवान् । सा द्वारकापुरी हेमप्राकारप्रभया सर्वादिशः 'पिङ्गलवर्णा' कुर्वन्ती समुद्राम्भसि प्रविष्टा वाडवाग्निरिवोल्ललास । अस्यां बहवो राजानः सन्ति । विधात्रा चेयं नगरी अनिर्विदा विदधे, द्वारकायां वणिजो रत्नसमृद्धा एषामेवापणे पूगीकृतानि रत्नानि समुद्रो हृत्वा रत्नाकरो बभूव । द्वारकायां सर्वे गृहा अत्युन्नताः, द्वारकानगर्याः स्त्रियोऽतिसौन्दर्यगुणोपेताः स्वर्गीयाप्सरोभिः समानाः । भेदस्त्वेतावानेव यदेता निमेषयुक्ता अत्युन्नतेषु गृहेषु रात्रावारुह्य, एता नभोगता देव्य इव व्यराजन् । क्षितिप्रतिष्ठा अप्येताः स्वमुखैश्चन्द्रमधश्चक्रुः । एतद्देशीयानि वस्त्राणि चातिसूक्ष्माणि । मनसोऽप्यगम्या अस्याः सम्पदः । इयं पुरी अमरावतीमपि 'जहास किमुत अन्याः' पुर्य इति । रैवतकादिवर्णनमपीत्थं स्वोचितरीत्या वा स्वयं पाठकैरावश्यके सति कार्यम् ।

## 'माघे सन्ति त्रयो गुणाः'

तथा हि न्यक्कृतकविभासः कालिदासः उपमापरः न चार्थगौरवधरः न च पदलालित्यकरः । इतश्च भारविस्तु अर्थगौरवकरणे सिद्धहस्तः,

योग्यः, उपमायामयोग्यः अर्थगौरवादयोग्यः। निराकृतदोषाऽघो माघो दत्तकदारक उपमाधारकः, अर्थगौरवकारकः पदलालित्यस्थापकश्चेति-त्रिगुणसत्त्वात् प्रशस्यः, अत एव तत्प्रशंसामाशंसता स्वभावप्रकाशन-रविणा कविना कथितम्—

**उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः॥**
**'घनं घनान्ते तडितां गणैरिव'।**

ईदृश्य उपमाः॥

तथा च—

**सप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः।**
**विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः॥**

अत्र हरेः प्रतिविशेषणं उपमाप्रायबद्धम्। तथा च तस्य हरेः द्युति-ततिप्रदर्शनाय तस्मै अकूपारस्योपमा प्रदायि खलु निरघेन माघेन।

**'स्थगयत्यमूः शमितचातकार्तस्वरा**
**जलदास्तडित्तुलितकान्तकार्त्तस्वराः।**
**जगतीरिह स्फुरितचारुचामीकराः**
**सवितुः क्वचित् कपिशयन्ति चामी कराः॥**

अत्राद्रिवर्णने जलदानां विशेषणेषु कीदृशानि ललितानि पदानि न्यस्तानि किल कविना, यैर्मनो नितरां मोमुह्यते, कविवराणामपीति पदलालित्यप्रदर्शने स्फुटोदाहृतिरियं माघकविकृते शिशुपालवधे काव्य इति।

**'सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः।'** अत्रार्थगौरवो दर्शितः।

अपि च—

**'जगत्पवित्रैरपि तन्न पादैः स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः।**
**यतो बृहत्पर्वणचन्द्रचारु तस्यातपत्रं बिभराम्बभूवे॥'**

अत्र खलु भगवान् मरीचिमाली भगवन्तं हरिं जगदर्च्यं विभाव्य जगत्पवित्रैरपि स्वीयैः पादैः किरणैश्च स्प्रष्टुं नार्हति, प्रत्युत हरेः

पूर्णेन्दुदीप्तिनिभमातपत्रं दध्रे इति स्वान्तसन्तोषको भृशं रम्योऽर्थगौरवो निविष्टो विनिष्टाघेन माघेनेति किमतिपल्लवितेनेत्यलम् ।

## माघस्य काव्यकौशलम्

पुरा भारतेऽस्मिन् कविकुलकुमुदकलाधरो दत्तकसूनुर्माघः कां भाषां न वेत्ति स्म ? किं शास्त्रं न जानाति स्म ? कां गुणावलिन्नाश्रयते स्म? इति सुविदितचरं तत्र भवताम् । '**काव्येषु माघः कविकालिदासः**' इति प्राच्योक्तिः केषामविदिता, भूतलेऽत्र माघस्य काव्यकौशलं परास्मुदमातनोतीत्यपि नाज्ञातम् ।

**'नवसर्गगते माघे नवशब्दो न विद्यते ।'**

इयं वृद्धोक्तिर्विद्वन्मण्डलेनाऽज्ञातन्नेत्याशास्महे । शब्दकाठिन्ये भारवेरेव कविचये मान्यत्वम् । परन्तु—

**'भारवेर्भारवेर्भाति यावन्माघस्य नोदयः ।'**

यावन्माघस्य नोदयस्तावदेव पद्मिनीपतेर्भा भाति तथा च भारवेस्तदाख्यस्य कवेस्तावदेव भा भाति यावन्माघस्य तदभिधेयकवेर्नोदयः—इति प्राच्यलेखेन भारविकृतकाव्यापेक्षा शब्दकाठिन्यं परमेवेति । माघकविकाव्ये उपमानोपमेयभावः शब्दकाठिन्यं पदलालित्यं च विद्वज्जनविदितमेवेति । अतः केनापि कविनोक्तमपि—

**'माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमम् ।'**
**'मुरारिपदचिन्ता चेत्तदा माघे रतिं कुरु ।'**
**'माघेनैव च माघेन कम्पः कस्य न जायते ।'**
**'उपमा कालिदासस्य भारवेरर्थगौरवम् ।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥'**

इत्यादि ।

अत्र यथामति मयोदाह्रियते । कवेर्माघस्य पूर्वं वैयाकरणत्वं द्योत्यते । श्रीकृष्णकृतकथनोद्यतोद्धवोक्तौ—

**अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।**
**शब्द-विद्येव नो भाति राजनीतिरपस्पशा ॥**

**निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ।**
**पाणिनीयमिवालोचि धीरैस्तत्समराजिरम् ॥**

श्लोकोऽयं चैद्ययुद्धवर्णनपरः । कविरत्र श्लोकयुगले श्लाघनीयां श्लेषकौशलीं व्याकरणविद्यावैदुषीञ्च प्रदर्शयन् कथं नाम राजनीतौ युद्धे शब्दविद्यासादृश्यं प्राचीकशत् । एवं —

**'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः'**
**'निजौजसोज्जासयितुं जगद्द्रुहामुपाजिहीथा न महीतलं यदि ।'**
**'सटाच्छटाभिन्नघनेन बिभ्रता'**

इत्यादिषु व्याकरणशब्दानामुपयोगं कुर्वन् कीदृशं रामणीयकमुदपादयच्च माघः । राजनीतिदक्षता माघकवेः कवियूथं जहातीव । यथा—

**उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ।**
**जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥**
**बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।**
**चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥**

श्लोकयुगलेऽत्र कवी राजनीतिदक्षतां कीदृशीं प्रकटीचकारेति विद्वन्मण्डलीभिर्नाज्ञातम् । श्रीकृष्णचन्द्रप्रेरित उद्धवः कीदृशी राजनीतिरिति स्पष्टमेवालोचयत् । इत्थं बहूनि प्रमाणानि राजनीतिदक्षत्वसूचकानि समुपलब्धानि सहृदयैर्बोध्यानि साहित्यशास्त्रपाण्डित्यं प्रकटीकर्तुमक्षमा वयम् । तथापि किञ्चिदुदाह्रियते—

**विद्वद्भिरागमपरैर्विवृतं कथञ्चि-**
**च्छ्रुत्वाऽपि दुर्ग्रहमनिश्चितधीभिरन्यैः ।**
**श्रेयान्द्विजातिरिव हन्तुमघानि दक्षं**
**गूढार्थमेष निधिमन्त्रगणं बिभर्ति ॥**

निधिगणं बिभ्राणे रैवतके गोत्रे मन्त्रसमूहवद्ब्राह्मणोत्तमसाम्यप्रदर्शनस्य कौशलमुल्लसति श्लोकेऽत्र कविराजस्य । पौराणिकी कथामनुसृत्य प्रयुक्तं निम्बपत्रेण साकं कलितं चूतपल्लवमुद्गमति कस्मिंश्चिदुष्ट्रे म्लेच्छमध्यस्थितं मुखगतं ब्राह्मणं दहन्तं ह्युज्झितवता तार्क्ष्येण सादृश्यं प्रकाशयत्वपरोऽयं श्लोकः--

**साधँ कथञ्चिदुचितैः पिचुमर्दपत्रै-**
**रास्यान्तरालगतमाम्रदलं म्रदीयः ।**
**दासेरकः सपदि संवलितं निषादै-**
**र्विप्रं पुरा पतगराडिव निर्जगार ॥**

इत्थं महत्त्वसूचकं पद्यं समुल्लसति शिशुपालवधे। सर्वतोभद्र-गोमूत्रिकादिरूपरचनाविशेषदुष्प्रवेशे चैद्यसैन्ये सर्वतोभद्रगोमूत्रिकादि-प्रभृतिनामधेयप्रसिद्धबन्धविशेषदुर्बोधमहाकाव्यसाम्यप्रतिपादकं पद्यमिदं चकास्ति।

**विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः ।**
**श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्‌बलम् ॥**

उपमाया विचित्रमुदाहरणं जलधरनीलस्य मुक्तालतालङ्कृतस्य श्रीकृष्णवक्षसः साम्यं मनसि कृत्य कविना प्रदर्शितम्।

**उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् ।**
**तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥**

इत्यादीनि बहून्युपमायाः सहृदयहृदयङ्गमाया उदाहरणानि शिशु-पालवधादुन्नेयानि। अर्थगौरवमप्यत्र काव्ये पर्याप्तं विलसतीति ग्रन्था-वलोकनतः स्फुटं प्रतीयेत। अस्याऽप्युदाहरणमेकं प्रदर्श्यतेऽस्माभिः। यथा—

**अपशङ्कमङ्कपरिवर्त्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्मजाः ।**
**अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥**

काव्यशास्त्र इव शास्त्रान्तरेऽपि माघकवेः प्रागाढं पाण्डित्यमासीदि-त्यपि निश्शंकं वक्तुं पारयामः। सांख्यप्रावीण्यं समुल्लसति पद्येऽमु-ष्मिन्—

**उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।**
**बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥**

अपरं च—

**तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ।**
**कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथर्त्विजि ॥**

योगशास्त्रप्रवीण्यं प्रकटीकरोति कविरस्मिन्—

मैत्र्यादिचित्तपरिकर्मविदो विधाय
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य,
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥

बौद्धशास्त्रप्रावीण्यं पद्येऽस्मिन् राजते—

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥

मीमांसानैपुण्यमपि स्फुटीभवत्येताभ्यां पद्याभ्याम् ।

शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनधर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां,
विधिविहितविरिब्धैः सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधुसान्नाय्यमग्निः ॥

स्फुटं कामशास्त्रपाण्डित्यमत्र कवेः—

'वर्जयन्त्याजनैः सङ्गमेकान्ततस्तर्कयन्त्या सुखं सङ्गमे कान्ततः ।
योषयैष स्मरासन्नता पाङ्गया सेव्यतेऽनेकयासन्नता पाङ्गया ॥'

तादृशमेव मानवशास्त्रपाण्डित्यमपि विलसत्यस्मिन्पद्ये—

पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ ।
तत्र कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् ॥

सङ्गीतशास्त्रपरिशीलनकौशलमप्यस्ति—

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद् ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥

श्लेषसौन्दर्यसमङ्कृतनाटयशास्त्रनैपुण्यस्याप्युदाहरणम्—

दधतस्तनिमानमानुपूर्व्या बभुरक्षि वसो मुखे विशालाः ।
भरतज्ञकविप्रणीतकाव्यग्रन्थिताङ्का इव नाटकप्रपञ्चाः ॥

**स्वादयन् रसमनेकसंस्कृतप्राकृतैरकृतपात्रसङ्करैः ।**
**भावशुद्धिविहितैर्मुदं जनो नाटकैरिव बभार भोजनैः ।।**

इत्थं सकलशास्त्राश्वगजपरीक्षणनिकषो माघ एव नान्य इति मे मतिः । विशेषस्तु सहृदयैः स्वयमूहनीय इति । प्रसिद्धिरेषा माघविषये–

**पुष्पेषु जाती नगरीषु काशी**
**नारीषु रम्भा पुरुषेषु विष्णुः ।**
**नदीषु गङ्गा नृपतौ च रामः**
**काव्येषु माघः कविकालिदासः ।।**

किं बहूक्त्या ।

## दण्डी

कोऽयं कविः कदा ह्ययं कस्मिन् प्रदेशे समभूदिति निर्णयोऽद्यावधिर्न जातः । मन्यन्ते च बहवो विद्वांसो यदयं ख्रीष्टस्य षष्ठशतकान्तिमभागे काञ्जीवरे[1] वीरदत्तस्य धर्मपत्न्यां गौर्यां जन्म लेभे, बाल्य एव च मात्रा पित्रा वियुज्य इतस्ततो भ्रमंश्चानन्तरं[2] पल्लवनरेशस्य सभायामागत्य तत्रैव तस्थौ । अन्ये च किरातप्रणेतुर्दामोदरस्य ( भारवेः ) प्रपौत्रोऽयमिति मत्वा सप्तमशतकान्तिमभागे तज्जन्मस्थितिरभूदित्यामनन्ति । अतस्तेषां मतेनाऽवन्तिकथानुसारतोऽयं कविः ।

---

१. 'मनोरथाह्वयस्तेषां मध्यमो वंशवर्धनः ।
ततस्तनूजाश्चत्वारः स्रष्टुर्वेदा इवाभवन् ।।
श्रीवीरदत्त इत्येषां मध्यमो वंशवर्धनः ।
यवीयानस्य च श्लाघ्यः गौरी नामाऽभवत्प्रिया ।
ततः कथञ्चित्तसा गौरी द्विजाधिपशिरोमणेः ।
कुमारं दण्डिनामानं व्यक्तशक्तिमजीजनत् ।
स बाल एव मात्रा च पित्रा चापि व्यवियुज्यत ।'

२. 'नासिक्यमध्यां परितश्चतुर्वर्णविभूषिता ।
अस्ति काचित्पुरी यस्यामष्टवर्णाह्वया नृपाः ।।'
काव्यदर्शस्य प्राचीनटीकाकारेण तरुणवाचस्पतिना स्वीकृतं यद् दण्डिना प्रहेलिकैषा काञ्चीपल्लव-नरेशस्य परिचायकेन कृतेति ।




## दण्डिकृतग्रन्थाः

**'त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः'**

अतो ज्ञायते काव्यादर्श, अवन्तिकथा, दशकुमारचरित्राख्या[1] एवेति। तत्र काव्यादर्शे बाणकालिदाससदृशा उक्तयोऽपि सन्तीत्यतोऽपि बाणभट्टादर्वाचीनो दण्डीति केचन कथयन्ति परं मया तु—ओमिति तत्र विवादग्रस्तनिगूढत्वभरिते विषये क्रियते। एतावानेवेह वक्तुं शक्यते यद्दण्डिनो ग्रन्थरचनाप्रणाली पूर्ववर्तित्वमेव द्योतयति।

## 'दण्डिनः पदलालित्यम्'

पदलालित्ये विख्यातः सरस्वत्या परिज्ञातस्तु निक्षिप्तपदलालित्यकरणशक्तकविजनमारणपविः कविर्दण्डी एव बभूव। यादृशं पदलालित्यं तत्काव्ये तादृशं पदलालित्यं नहि कस्यचित्कवेः—काव्ये विद्यते

१. दशानां कुमाराणां चरित्रं वर्ण्यते यत्तद्दशकुमारचरितम्। १–राजवाहन २–प्रमति ३–मित्रगुप्त ४–मन्त्रगुप्त ५–विश्रुत ६–उपहारवर्मा ७–अपहारवर्मा ८–पुष्पोद्भव ९–अर्थपाल १०–सोमदत्त एते दश कुमाराः।

यथा तत्कृतदशकुमारचरिते—'**देव ! दीयतामनुग्रहहार्दश्च चित्तम्, अहमस्मि सोमरश्मिसम्भवा सुरतमञ्जरी नाम—सुरसुन्दरी०**' एतादृशं मनोमोहनं हृद्द्रावकं पदलालित्यं तत्कवेर्विदुषां मनो नितरां रञ्जयति। अत एव तत्कवितामृततृप्तस्य कस्यचिदुक्तिरियं समुचिताऽऽभाति—

**जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।**
**कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥'**

## महाकविर्बाणः

ऐतिहासिका इत्थमाचक्षते यद्—'हर्षदेवो' नाम नराधिपः ख्रीष्टीयसप्तमशताब्द्या मध्यभागे षष्ठ्यां शताब्द्यां वा कान्यकुब्जराज्यमकरोत् स एव कालो बाणस्य महाकवेरिति निःसंशयं प्रतीमः। यतो हि—

**'श्रीहर्ष इत्यवनिवर्तिषु पार्थिवेषु**
**नाम्नैव केवलमजायत वस्तुतस्तु।**
**श्रीहर्ष एष निजसंसदि येन राज्ञा**
**सम्पूजितः कनककोटिशतेन बाणः॥'**

राजशेखरोऽपीत्थं वदति—

**अहो प्रभावो वाग्देव्या यन्मातङ्ग-दिवाकरः।**
**श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥**

अतो हर्षकालीन एव बाणभट्ट इति निर्विवादम॥

अयं कविपुङ्गवः शोणनदस्य पश्चिमे तटे प्रीतिकूटनाम्नि ग्रामे वात्स्यायनवंशे चित्रभानो राजदेव्यां समुत्पन्न इति निर्विवादं जानीमः। तदेतदेतदीयहर्षचरितेन कादम्बरीगद्यस्योपक्रमश्लोकैश्च सुस्पष्टमवगम्यते। अस्य वंशपरम्पराऽपि च तत एव ज्ञातुं सुशका।

अयं महादेवोपासनायां पूर्णतया आग्रही बभूवेति सम्भावयामः, यतोऽयं हर्षभ्रात्रा कृष्णेनाहूतः श्रीहर्षसभायां प्रवेशाय प्रास्थानिकानि मङ्गलानि प्रतुष्टुवानो भगवन्तं विरूपाक्षमेव समादरेण पूजयाम्बभूव।

तथाहि—

**'देवदेवस्य विरूपाक्षस्य**
**क्षीरस्नपनपुरःसराम् ।**
**सुरभिकुसुमधूपगन्धध्वजबलिविलेपन**
**प्रदीपकबहुलां विधाय पूजाम् ॥'**

इत्यादि हर्षचरितस्य द्वितीयोल्लासे तेन स्वोपासनाचर्या स्वयमेव स्पष्टीकृतेति तत एवाधिकं कर्णेहृत्य निरीक्षणीयम् ।

यत्तु—

**'प्रागल्भ्यमधिकमवाप्तुं वाणी बाणो बभूवेति ।'**

इति गोवर्धनाचार्योक्तिस्तत्कृतकतिपयगद्यांशैः समर्थनीया इति प्रश्नयन्ति प्रायः परीक्षकाः । तत्रोच्यते, उक्तश्लोकस्य—**'जाता शिखण्डनी प्राग्यथा शिखण्डी तथावगच्छामि'** इति पूर्वार्धं वर्तते। पूर्वं यथा शिखण्डनी द्रुपदपुत्री शिखण्डी द्रुपदपुत्ररूपा बभूव तथा वाणी सरस्वत्यपि अधिकप्रागल्भ्यप्राप्त्यर्थं बाणवाणी—कादम्बरीकर्त्तृरूपा बभूव। प्रायः प्रागल्भ्यं पुंस्त्वसमानाधिकरणकमिति सरस्वतीतो बाणेऽधिकत्वं द्योत्यते । तथा सन्त्यनेकानि तादृशानि गद्यानि हर्षचरिते कादम्बर्याश्च यान्युक्तार्थसमर्थकानि । ग्रन्थगौरवभिया दिङ्मात्रन्तूदाहरामः—

**'भगवत्युदयगिरिशिखरकटककुहरहरिखरनखरनिवहेतिनिहतनिजहरिणगलितरुधिरनिचयनिर्चितमिव लोहितं वपुरुदयरागधरमधरमिव विभावरीवध्वा धारयति श्वेतभानौ'** ।

**कटुक्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव ।**
**मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥**

इत्यादि ।

अत्र कीदृशी अनुप्रासच्छटा-उत्प्रेक्षा—उपमा—श्लेष—रूपकादिकञ्चेत्यादिबहु 'सूक्ष्मे'क्षिकयालोच्यं काव्यवपुरित्यनया दिशाऽन्यत्राप्यस्य प्रागल्भ्यं स्वयमूहनीयम् । एतत्कृतग्रन्था इमे सन्ति कादम्बरी, हर्षचरितम्, मुकुट-ताडितनाटकम्, पार्वतीपरिणयः, चण्डिकाशतकं चेति ।

## वंशवृक्षः

महर्षिदधीचिः ( पत्नी सरस्वती )
|
सारस्वतः ( सरस्वत्यां जातः अक्षमालिकायै दत्तश्च )
|
श्रीवत्सः ( वात्स्यायनः )
|
कुबेरः ( तत्रैव वात्स्यायनान्वयेऽयमभूत् )
|
अच्युतः | हरः | ईशानः | पाशुपतः
|
अर्थपतिः
|
चित्रभानुः ( पत्नी राजदेवी )
|
बाणभट्टः
|
पुलिन्दभट्टः ( भूषणभट्टो वा )

कादम्बरी—एतस्या भागद्वयं वर्तते। तत्र पूर्वभागः बाणभट्टेन लिखितः, उत्तरभागस्तु तत्तनयेन पुलिन्दभट्टेन। यथा—बाणतनय एव व्याहरति—

'याते दिवं पितरि तद्वचसैव सार्धं
विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुखं सतां तदसमाप्तिकृतं विलोक्य
प्रारब्ध एष च मया न कवित्वदर्पात्॥
गद्ये कृतेऽपि गुरुणा तु तथाक्षराणि
यन्निर्गतानि पितुरेव समेऽनुभावः।
कादम्बरीरसभरेण समस्त एव,
मत्तो न किञ्चिदपि चेतयते जनोऽयम्॥

कादम्बं रातीति कादम्बरीति नामकरणप्रस्तावे—एतदुक्तमस्ति यत् 'कवेर्वृत्तस्य नाम्ना वा नायकस्येतरस्य वे'ति तत इतरस्येत्यनेन नायिकायाः प्रतिनायकस्य नाम्ना वा ग्रन्थनाम विदध्यात्। अतश्च कादम्बरीति नायिकाया नाम्नैव ग्रन्थस्य नामकरणं कृतम्। एवञ्च कथारूपत्वात् स्त्रीत्वमपि सङ्गच्छते। गद्यकाव्ये कथाकाव्यं तथा—**आख्यायिका च भवति कादम्बर्याः कथाकाव्येऽन्तर्भावः कथायां सरसं वस्तु गद्यैरेव विनिर्मितं भवति।** आख्यायिकायाम् आख्यायिका कथावद्भवति, परन्तु तत्र कवेर्वंशादिकीर्तनमात्रं विषयत्वेनावलम्ब्यते। तथा च कथालक्षणम्—

**'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।**
**क्वचिदत्र भवेदार्या क्वचिद्वक्त्राऽपवक्त्रके।**
**आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्॥'**

कादम्बरी गद्यमयी एव—आर्याद्वियमप्यत्र यथा—**'स्तनयुगमश्रस्नातम्' 'दूरं मुक्तालतया०'** इत्यादिः। आदौ पद्यैर्नमस्कारो यथा—**'रजोजुषे०'** इत्यादौ। खलादेर्वृत्तकीर्तनं यथा—**'अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते'** इत्यादौ। आख्यायिका कथावत्स्यात्कवेर्वंशादिकीर्तनमित्युभयोर्भेदः।

## कादम्बरीनायकचन्द्रापीडस्य परिचयः

उज्जयिनीश्वरस्य तारापीडस्य विलासवत्यां चन्द्रापीडो जातः। अयञ्चाधीतसर्वविद्यो वैशम्पायनमन्त्रिसुतेन सहैकदा इन्द्रायुधमारुह्य दिग्विजयाय दक्षिणस्यां दिशि समगमत्। तत्र कानने किन्नरयुगलं दृष्ट्वा तदनुच्छन्—अच्छोदसरस्तटे निर्गतः तत्र च सरसि वृक्षमूले विश्राम्य सरसः उत्तरे वीणागीतमश्रृणोत्। दृष्टा च शिवाराधनपरा महाश्वेता सापि कृतातिथ्यसत्कारा तस्मै स्ववृत्तान्तमकथयत्। ततः साश्चर्यं मन्वानश्चन्द्रापीडस्तयैव सह हेमकूटे[1] कादम्बरीमपश्यत्। ततः

---

१. तत्रैव किंपुरुषनाम्नि वर्षे हेमकूटे दक्षस्य मुनिकन्यायां गन्धर्वसमागमेन चित्ररथो नाम गन्धर्वराजोऽभूत्। तेनैव चित्ररथेन अच्छोदनामसरश्च

कादम्बरी चन्द्रापीडयोः परस्परानुरागो जातः पाणिपीडनाय महाश्वेतोपदेशादिकश्च। अस्तु चन्द्रापीडः खलु महान् साहसी प्रतापी सर्वविद्यासनाथी नृपनीतिज्ञो धृत्यादिगुणोपेतो मातृ-पितृ-भक्तिवत्सलो व्यायामकोविदो, महान् वीरनृपश्चासीदयमेव जन्मान्तरीयो राजा शूद्रक इति।

## शुकनासस्य चन्द्रापीडं प्रत्युपदेशः

चन्द्रापीड ! यौवनारम्भे शास्त्रपारंगतानामपि पुरुषाणां बुद्धिभ्रमो जायते। अतितरं दुःखं जनयत्येष यौवनकालः। इन्द्रियवाजिनो युवकानां वशवर्त्तिनो न भवन्ति। यौवनमदानुसारेण कामिनी-काञ्चनादि-भोग्यवस्तुप्रभृतीनां भोगेन युवकानां बुद्धिर्विनष्टा भवति। कामबाणजर्जरितस्य पुरुषस्य हृदये उपदेशजातं स्थितिं न लभते। राज्ञा केचिन्नोपदेष्टारः सर्व-एव तेषां कथनानुयायिनः। लक्ष्मीश्चापि या राज्ञा नित्यसहचारिणी साप्यतिदुःखमानयति। कुलक्रमानुसरणमपि लक्ष्म्या अनभिज्ञातम्। विद्वांसमपि लक्ष्मीः सदैव तिरस्करोति। राज्ञां सदसि बहवः पुरुषा स्वार्थसम्पादनपरायणा धनरूपमांसग्रहणे शकुनस्वरूपा वर्तन्ते। ते पुनः द्यूतं विनोदः, पानं विलासः, प्रमत्तता शौर्यं, गीतवाद्य-

---

निर्मितम्। अस्य चित्ररथस्य अमृतकुलोत्पन्नायां मदिरायां च कादम्बरी जाता। बाल्यकालत एवास्या महत्प्रेम महाश्वेतायाम्। महाश्वेता च हंसस्य गौरीभार्यायां जन्म लेभे। महाश्वेतायास्तरलिका दासी चासीत्। महर्षेः श्वेतकेतोश्च लक्ष्म्यां पुण्डरीकोऽजनि पुत्रः। तस्य सखा कपिञ्जलः। अप्सरसां चतुर्दश कुलानीमानि—१ लक्ष्मीपतेर्मानसादेकं, २ देवेभ्यः, ३ अग्नेः, ४ जलात्, ५ पृथ्व्याः, ६ पवनात्, ७ अमृतात्, ८ सूर्यकिरणेभ्यः, ९ चन्द्रकिरणेभ्यः, १० सौदामिन्याः, ११ मृत्योः, १२ अरिष्टायाः, १३ मुनिकन्यायाः, १४ मदिरायाः। शुकनाशः तारापीडस्य मन्त्री, वैशम्पायनश्चन्द्रापीडस्य मन्त्री, अयमेवैकस्मिन् जन्मनि पुण्डरीकः द्वितीये च शापवशेन वैशम्पायनस्तृतीये महाश्वेताशापेन पक्षी वैशम्पायनः। अथ कपिञ्जलोऽपीन्द्रायुधो मुनिशापेन, पत्रलेखा चन्द्रलोके गता। चन्द्रापीडः शूद्रकरूपेऽवतरितः।

वेश्याभिसक्तिः रसिकतेति, बन्दिजनख्यातिः यश इति कथयन्ति। अतश्चन्द्रापीड ! तथा प्रयतेथाः यथा जनैर्नोपहास्यसे, साधुभिर्न निन्द्यसे, धूर्त्तैश्च न वञ्च्यसे, मदेन न नर्त्यसे, विषयैर्नाक्षिप्यसे, यतः सचेतनं महासत्त्वे धीरं विद्वांसमपि पुरुषं दुर्विनीता लक्ष्मीः खलीकरोति। परं यदि विदुषां बुद्धिशस्त्रं न स्यात्तर्हि न जाने दुर्विनीतेयं किं किं कर्त्तुं शक्नुयात्। बुद्धिबलेनैव धीरास्तत्कुचक्रे न निपतन्ति अतस्त्वमपि विद्वान् सदुपदेशप्रदानयोग्यश्चेति वच्मि त्वया मदुपदेशोऽयं स्वजीवने न विस्मर्तव्यः।

## महाश्वेता

इयमेका परकीया कन्या। अस्यां बहवो गुणा आसन्। इयञ्च परमलज्जावती पतिव्रताऽऽसीत्। पुण्डरीकदर्शनेनैवाऽस्यां मदनविकारः समुत्पन्नः। तदारभ्यैषा सदा तस्य चिन्तापरायणा मदनानलदह्यमानाऽऽसीत्। पुण्डरीकस्य मरणानन्तरमेव संसारस्याऽसारतां क्षणभङ्गुरताञ्चावलोकयन्ती चिराय ब्रह्मचर्यव्रतमवलम्बितवतीत्यादिभिरेवास्याः पातिव्रतादिधर्मपरायणता स्फुटं द्योत्यते। इयमेव च कादम्बरीनायकनायिकयोरुपयोगे महोपयोगिनी सर्वस्यापि कादम्बरीसन्दर्भस्य च प्रसवित्री तत् संघटने सङ्गमने वा प्रधानसङ्गतिभूता बीजरूपेति चान्यथा सन्दर्भस्यास्य महाननुपयोगक्षतिः स्यात्।

## कपिञ्जलः

कपिञ्जलोऽयं महर्षेः श्वेतकेतोः श्रियाः देव्याः पुण्डरीकः पुत्रस्तस्य परमस्नेही सखा च। स हि उदारस्तथा परं ज्ञानवान्। स एव पुण्डरीकस्य महाश्वेतादर्शनेन कामपरवशमनसस्तदैकमात्रः सहायः। स एव पुण्डरीकं कथयति यद् धैर्यधना हि साधवः, यतो विक्लवीभवन्तमात्मान्न न रुणत्सि। अतस्त्वमनुचितं करोषि। क्वास्ति ते चेतसो वशित्वं, क्व च भोगानामुपरि अरुचिः, सर्वथा निष्फला ते प्रज्ञा, धर्मशास्त्राध्ययनं निष्फलमिदानीं ते यदत्र कामपरवशोऽसि। स एव महाश्वेतां बहुप्रकारेणोपदिशति। कपिञ्जलस्योक्तय एव तस्या बुद्धिमत्तायाः परिचय

दायिन्यः। स हि पुण्डरीकं कोऽयं मदनो नाम धैर्यमवलम्ब्य निर्भर्त्स्यतामेनं दुराचारमित्युपदिशति।

## महाकविबाणकौशलम्

बाणभट्टो देव्याः सरस्वत्या वरदः पुत्रो महामहिमशाली प्रतिभासम्पन्नः कविः। अस्य वर्णनशैली नितरां रञ्जयति सहृदयहृदयानि मोहयति च विद्वज्जनमानसान्। एतादृशी रसभावभरिता हृदयद्रावकता न हि कस्यचित्कवेः काव्ये वर्तते। दृश्यतां, महाश्वेताया विरहवर्णनं कया रीत्या कीदृशैश्च सुकुमारशब्दैः कृतम्। अच्छोदसरोवरस्य मनोमोहकं भावभरितं वर्णनं कस्य सचेतसश्चित्तं नाह्लादयति। उपमाश्लेषानुप्रासोत्प्रेक्षाप्रभृतीनामलङ्काराणां पदे पदे कीदृशी छटा विराजते। प्राकृतदृश्यवर्णने कवेः कीदृशी निपुणता। अत एवाह धर्मदास इत्थम्—

**'रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।**
**सा किं तरुणी न हि न हि बाणी बाणस्य मधुरशीलस्य॥'**

अन्योऽपि कश्चित्—

**'शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते।**
**शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि॥'**
**'आः सर्वत्र गभीरधीरकविता विन्ध्याटवी चातुरी।**
**सञ्चारी करिकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥'**

पाठकाः—इत्यादिभिरपि ज्ञातुं शक्नुवन्ति यद् बाणस्य कविता तद्रचनाप्रणाली च सर्वानिवान्यान् कवीनतिशेते किं बहुक्त्या। बाणविषये किंवदन्ती एषा यद् बाणभट्टस्य विवाहो मयूरपुत्र्या सह समभूत्। स च कविर्मयूर एकदा कवितां निर्माय यदा तद्द्रष्टुमना रात्रेश्चतुर्थप्रहरान्त एव बाणस्य गृहं समेत्य द्वारि तस्थौ, तदा बाणः स्वप्रियतमां प्रसादयितुं श्लोकस्य पादत्रयं निर्माय श्रावयितुमारेभे—

**'गतप्राया रात्रिः कृशतनुशशी शीर्यत इव,**
**प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव।**
**प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो।'**

ततो मयूरश्चतुर्थपादपूर्तिं कृत्वा त्वरेणाह—

**कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥'**

इति चान्ते मयूरेण सूर्यशतकं विरच्य स्वरोगोऽपनीतः निःसारितो वा स्वशरीरात्। बाणेनापि चण्डिकाशतकं प्रणीय भगवती तोषिता स्वमनोरथश्च सफलितः।

## कविवरविशाखदत्तः

मुद्राराक्षसं नाम नाटकस्य रचयिता कविरयं वटेश्वरदत्तस्य पौत्रः महाराजस्य पृथोः पुत्र आसीत्। कस्मिन् समये तेनैतल्लिखितमिति बहुशः शङ्का जायन्ते। परन्तु बहुमतेनैतदेव निर्णीयते यत्ख्रीष्टकालानन्तरं प्रायशोऽष्टमशताब्द्यामेतल्लिखितम्। धनिकस्य दशरूपावलोके भोजस्य सरस्वतीकण्ठाभरणे च मुद्राराक्षसस्य श्लोकान्निरीक्ष्य दशमशतकस्य पूर्ववर्त्तीति प्रतीयते निर्विवादमिदञ्च। नाटकमिदं विशाखदत्तेन भारतवर्षस्येतिहासकथां गृहीत्वा व्यरचि। अथवा—

**'चाणक्यनाम्ना तेनाथ शकटारगृहे रहः।**
**कृत्यां विधाय सहसा सपुत्रो निहतो नृपः॥**
**योगानन्दयशःशेषे पूर्वनन्दसुतस्ततः।**
**चन्द्रगुप्तः कृतो राजा चाणक्येन महौजसा॥'**

इति बृहत्कथायामपि लिखितम्। अतोऽत्र नाटकलक्षणसङ्गतिः स्फुटमेव सिध्यति। राजनीतिनिपुणोऽयं कविस्तत्र महान् पटुः प्रतीयते। नाटकस्यास्य प्रथमेऽङ्के नीतिसंशीलनम्। द्वितीये राक्षसस्य चरमुखेन स्वप्रयोगशल्यश्रवणम्। तृतीये चाणक्यप्रतिषिद्धकौमुदीमहोत्सवक्रुद्धेन चन्द्रगुप्तेन कृत्रिमकलहः। चतुर्थे कुसुमपुरोदन्तश्रवणेन राक्षसस्य विषादः। मलयकेतुना च प्रयोगकरणार्थं विचारः। पञ्चमे मलयकेतोरविश्वासो राक्षसापरक्तिश्च। षष्ठे चन्दनदासस्य शूलारोपणकथाश्रवणेन राक्षसस्य शोकः कुसुमपुरगमनं चन्दनदासमोचनाय आत्मनो देहस्यार्पणविचारणञ्च। सप्तमे राक्षसस्यातिखिन्नमनसस्तत्र कुसुमोद्याने—आत्मसमर्पणमेवं तत्र रक्षकैर्धृते चाणक्यनिकटे प्राप्तिः। चन्दनदासस्य

मुक्तिः चन्द्रगुप्तस्य राज्ञो मन्त्रिपदे राक्षसस्यारोपणमिति वर्णितम्। अत्र धीरललितो नायकश्चन्द्रगुप्तः। अन्योऽन्यमुद्दिश्यान्योऽन्यतर्जनादीनि उद्दीपनविभावाः। उपायचिन्तनादिरनुभावः। उत्साहः स्थायी। वीररसोऽङ्गी, करुणोद्भुतादयोऽङ्गरसाः। चाणक्यराक्षसौ चन्द्रगुप्तमलयकेत्वोर्नायकप्रतिनायकयोरुपनायकाख्यौ सहायौ। रीतिर्गौडी। ओजो गुणः। उद्घात्यकरूपा प्रस्तावना च यथा अस्या लक्षणं **'पदानि त्वगतार्थानि तदर्थगतये नराः। योजयन्ती पदैरन्यैः स उद्घात्यक उच्यते ॥'** यतोऽत्र—**'क्रूरग्रहः स केतुः चन्द्रमसम्पूर्णमण्डलमिदानी'**मित्यादिवाक्येन पात्रप्रवेशो जायते। अष्टपदा च नान्दी, प्रायो भारतीवृत्तिश्च।

## चाणक्यः

चन्द्रगुप्तहननाय सुरङ्गद्वारेण प्रेषितानां राक्षसप्रणिधीनां सतण्डुलकणाः पिपीलिका अवलोक्य विज्ञानमतीवाश्चर्यकरमेवञ्चास्य चरिते श्रूयते यद् विवाहार्थं ग्राममागच्छन् पथि कुशक्षतचरणो मूलतः कुशनाशाय कृतामर्शः कुशमूलेषु दध्युदकं ददौ। अनेनाऽयमीषदपि परापकारासहिष्णुः शत्रून्मूलनदृढप्रतिज्ञः सकलशास्त्रवेत्ता विशेषतः कूटनीतिज्ञ इति प्रतीयते। अन्यच्चानेन साधारणेन द्रव्यविकलेन भूत्वापि नवनन्दा महापराक्रमिणः प्रभावशालिनो नृपाः स्वहस्तेन हता इति सन्त्यस्य महान्तस्तीव्रव्यवहारा अनेकश इति ज्ञायते। मुद्रयाऽङ्गुलिमुद्रया गृहीतो राक्षसो यत्र तन्मुद्राराक्षसनाटकमिति तन्नामकरणे कारणम्।

## महाकविश्रीहर्षः

श्रीहर्षो नाम महाकविरखिलतन्त्रस्वतन्त्रस्तर्कपीयूषपारावारगम्भीरतास्पृशाधौरेयः चिन्तामणिमन्त्रोपासकः सकलदर्शनटीकाकारवाचस्पतिमिश्रादुत्तरभाविन उदयनाचार्यस्य परावर्त्ती समभूदित्यत्र न कोऽपि विवादः प्रतीयते, यत उदयनस्य मतं खण्डनखण्डखाद्यग्रन्थे श्रीहर्षेण सोपहासं खण्डितम्। तथाहि—

'शङ्का चेदनुमात्येव न चेच्छङ्कातरस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ।।'

इतीयं कारिका कुसुमाञ्जलिग्रन्थे तृतीये स्तबके। ननु कदाचिदयोग्योपाधिशङ्कया धूमादावपि व्यभिचारशङ्कया व्यप्तिनिश्चयो न स्यादित्याक्षेपे उक्ता। तामिमां कारकां प्रथमे परिच्छेदेऽनुमानखण्डनावसरे इत्थमखण्डयत्—

तस्मादस्माभिरप्यस्मिन्नर्थेन खलु दुष्टता ।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ।।
व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ।। इति ।।

कदाचिदयं गौड एव स्यात्। गौडाधिपतिना महाशूरेण कान्यकुब्जदेशादीनातानां ब्राह्मणानामन्यतमोऽयं ब्राह्मणः कान्यकुब्जदेशाधीश्वरस्य जयचन्द्रस्य सभायां मान्यो महाकविषु गणितो बभूव। तदेतद् अस्यैव कृत्या विज्ञायते। खण्डनखण्डखाद्यस्य नैषधचरितस्य चान्ते एवं श्लोकमुपलभ्यते—

ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात्कुरुते समाधिषु परब्रह्मप्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीहर्षस्य कवेः कृतिः कृतिमुदे सम्प्रत्युदीयादियम् ।।

नैषधचरितसर्गस्यान्ते तु—

श्रीहर्षः कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
गौडोर्वीशकुलप्रशस्तितिलकभ्रातर्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत्सप्तमः ।।

इति चोपलभ्यते। श्रीजयचन्द्रस्तु त्रिचत्वारिंशदधिकद्वादशशतमिते वैक्रमे वर्षेऽभूदिति तद्दानपत्रादितोऽवसीयते। अयमेव राठौरवंशीयानां कान्यकुब्जाधिपानामन्तिमो राजा बभूव यं यवना ईसवीयपञ्चनवत्युत्तरैकादशशताब्द्यां प्रसह्य राज्याद् भ्रंशयाञ्चक्रुः। एवञ्चैकादश-

शताब्दीकालोजयचन्द्रस्य, स एव श्रीहर्षस्य (११९५) काल इत्यायातं भवति। परे तु 'ख्रीष्टद्वादशशताब्युत्तरार्ध'माहुः।

नैषधचरितम्, खण्डनखण्डखाद्यम्, गौडोर्वीशकुलप्रशस्तिः, अर्णववर्णनम् इत्याद्या एकादशग्रन्था अनेन प्रणीताः सन्तीति श्रूयते।

अत्र केचित् पाश्चात्यानुसन्धादक्षा एवमाकलयन्ते—यद्यपि पण्डितसमाजे एतत्प्रणीतस्य नैषधाख्यमहाकाव्यस्य महानादरोऽस्ति परं तत्र कथाया नैसर्गिकं सौष्ठवं, रचनास्वारस्यं वा न हेतुरस्ति। न ह्येतादृशा गुणाः श्रीहर्षरचनायां स्वभावसिद्धा भवितुमर्हन्ति, महाभारतान्तर्गतनलदमयन्त्युपाख्यानमुपादय, तद्रचनात्युक्तिमहाशैलशिखरे स्थितोऽयं महाकविः प्राकृतदृश्यचित्राकर्षणमेधाविकलो भूतस्तथाऽकवयीद् यथाऽस्य सत्यार्थताकारकृन्तनपटुता सर्वतोऽतिशायिनीत्येवमुक्तिर्न कथमप्यसामञ्जस्यं धारयति। ननु नाम प्राकृतपदार्थस्वभावसिद्धसीमापरिपालनं श्रीहर्षप्रतिभातो नितान्तमेव अनभ्यासमित्यावर्त्तते। अलङ्कारशास्त्रप्रतिपादितकतिपयकवितानियमानुल्लङ्घनमेव विद्वत्समाजेऽस्यालौकिकप्रतिष्ठाकारणमिति जानीमः। अनेन महाकविना ध्वनिप्रधानकाव्यं रचयताऽद्भुतं दाक्ष्यं प्रकटितमिति नात्र संशेमहे इति।

एतस्यां पाश्चात्यकल्पनायां कियान् सारो वाऽसारो वेति विज्ञाः स्वयमेव आकलयन्तु, वयमिदानीं वाचंयमा एव तिष्ठामः, विरला हि गुणज्ञता पाश्चात्यशिक्षाधूर्वहेष्वित्यस्माकमनुभवः।

अपि चैवं श्रूयते—अनेन नैषधं काव्यं रचयित्वा श्रीमन्महासरस्वत्यवतारभूताय मम्मटाय प्रदर्शितम्। तेन चोक्तम्—यदि काव्यप्रकाशरचनातः पूर्वमेवानेष्यस्तदाहं काव्यदोषोद्धरणार्थमुदाहरणान्तराणि गवेषयितुं नैव प्रयासमावक्ष्यमिति तदेतत्सत्यमसत्यं वेति न जानीमहे। स्यादेतत्, किन्तु नैषधे पदानामलौकिकं लालित्यं यथा—

**ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोकेशयलोकमध्ये।**
**तिर्यञ्चमप्यञ्च मृषानभिज्ञरसज्ञतोपज्ञसमज्ञमज्ञम्॥**
**मध्ये समं सावततारबाला गन्धर्वविद्याधरकण्ठनाला।**
**त्रयीमयी भूतवली विभङ्गा साहित्यनिर्वर्तितदृक्तरङ्गा॥**

श्रीहर्षे ललितललिताभिरेभिः पदावलीभिः किं न चित्रयति सहृदयमानसान् ? न हि कस्यचिदपि कवेः काव्ये—एतादृशं मनमोहकं रसभावभरितं पदलालित्यं वर्तते । अतः सत्यमेवोक्तं केनचित् **'नैषधे पदलालित्यम्'** इति । अत्र केवलं पदलालित्यमेव प्रशस्यतरं न प्रत्युत कवेः काव्यकौशलमपि लोकोत्तरं विद्वत्तापरिपूर्णञ्चेति विभावयन्तु सहृदयाः । को हि न जानाति यत्काव्यस्यास्य सप्तदशः सर्गः कवेर्वैदुष्यस्य कीदृशं ज्वलत्प्रमाणं प्रत्यक्षोदाहरणञ्चेति । काव्येऽत्र सर्वत्रैव कविकौशलं प्रतिभाति । तत्र संक्षेपतो यथा—तार्किकत्वे त्वस्य **तर्केष्वप्यसमश्रमस्य ग्रषितपरास्तर्केषु यस्योक्तयः'** इति स्वयमुद्घोषितवतः स्वाभाविकं स्वारस्यं काव्यस्यानुशीलनशालिनां न परोक्षम् ।

अश्रुपातो विरहवेदनाविवर्णवदनाया विदर्भभुवो विचित्रयात्राधोवर्णितोऽस्ति ।

**उदयतिस्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यत् ।**
**अनुमितोऽपि च बाष्पनिरीक्षणाद् व्यभिचचार न तापकरोऽनलः ॥**

अस्माभिः कैश्चिदप्यश्रुतचरं कविनाऽमुनाऽनुभूतं संसाधनं पश्यन्तु वैचित्र्यवीक्षणविचक्षणाः कुलालम्—

**रोमावली-दण्ड-नितम्ब-चक्रे गुणश्च लावण्यजलञ्च बाला ।**
**तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्तिशङ्के सहकारिचक्रम् ॥**

एवमेव द्वितीयस्य द्वात्रिंशं चतुर्थस्य चतुर्दशं तृतीयस्य सप्तदशमपि निरुक्त-विषयस्य द्योतकम् ।

**राजा स यज्वा विबुधव्रजत्रा कृत्वाध्वराज्योपमयेव राज्यम् ।**
**भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः पूर्वन्त्वहो शेषमशेषमन्त्यम् ॥**
**राज्ञो द्विजानामिह राजदन्ताः सम्बिभ्रति श्रोत्रियविभ्रमं यत् ।**
**उद्वेगरागादिमृजावदाताश्चत्वार एते तदवैमि मुक्ताः ॥**
**विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ।**
**विग्रहं मखभुजामसहिष्णुर्व्यर्थतां मदशनिः स निनाय ॥**

दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत् ।
वशान्धकारादथ दृश्यभालस्थलार्धचन्द्रास्फुटमष्टमीयम् ।
एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ।।
अरुन्धती कामपुरन्ध्रिलक्ष्मी जम्भद्विषद्वारनवाम्बिकानाम् ।
चतुर्दशीयं तदिहोचितैव गुल्फद्वयाप्ता यददृश्यसिद्धिः ।।
न वर्तसे मन्मथनाटिका कथं प्रकाशरोमावलिसूत्रधारिणी ।
तवाङ्घ्रिहारे रुचमेति नायकः शिखामणिश्च द्विजराड् विदूषकः ।।
अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः स तमानन्दमबिन्दत द्विजः ।।

साप्तुं प्रयच्छति न पक्षचतुष्टये तां तल्लाभशंसिनि न पञ्चमकोटिमात्रे ।
श्रद्धां दधे निषधराड्विमतौ मतानामद्वैततत्त्व इव सत्यतरेऽपि लोकः ।।

स्वच्छ बह्म च संसारे मुक्तौ तु ब्रह्म केवलम् ।
इति स्वोच्छितिमुक्त्युक्तिर्वैदग्धी वेदवादिनाम् ।।
उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ।।
कः शमः क्रियतां प्राज्ञः प्रियाप्रीतौ परिश्रमः ।
भस्मीभूतस्य देहस्य पुनरावर्तनं कुतः ।।
मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गौतमं तमवेक्ष्यैव यथा वित्थ तथैव सः ।।
भुङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनिलोक एषः ।।
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः ।।

इत्यादीनि पद्यान्यस्यानवद्यं वैदुष्यं नास्तिकास्तिकसिद्धान्तेष्वप्रतिहत्या साधयन्ति ।

जगत्त्रयीपण्डितमण्डितैषा सभा न भूता च न भाविनी च ।
राज्ञां गुणज्ञापनकैतवेन संख्यावतः श्रावय वाङ्मुखानि ।।

इति श्रद्धा-सङ्कल्पित-कल्पना-कल्पद्रुमस्य भगवतो भक्तवत्सलस्य विष्णोरादेशं सादरं स्वीकृत्य समागतायाः प्रतिभातिक्रान्तविधिवैभवानां

कवीनामेकाश्रयायाः सरस्वत्याः स्वरूपनिरूपणं शास्त्रज्ञैः स्वयमेव दशमे सर्गे कविकृतं निरूपणीयम्। अन्तःकरणेन प्रशंसनीयं स्वयमेव तस्य वैदग्ध्यं स्फुटीभविष्यति।

उपर्युक्ते विषये स्वयमेव कविर्निर्दिशति—

**तस्यागादगमष्टमः कविकुलादृष्टाध्वपान्थे महा-**
**काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥**
**एकामत्यजतो नवार्थघटनामेकान्नविंशो महा-**
**काये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥**
**अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-**
**काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥**
**ध्वान्तस्य वामोविचारणायां वैशेषिकं चारुमतं गतं मे।**
**औलूकमाहुः खलु दर्शनं तत् क्षमं नमस्तत्त्वनिरूपणाय॥**

उक्त एवार्थे कविर्गर्वं परिहरन् सरस्वतीजाग्रदधिष्ठानकाश्मीरदेशोद्भवानां स्वारस्यमपि प्रमाणति—

**काश्मीरे मिहिते चतुर्दशतयी विद्यां विदद्भिर्महा-**
**काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोडशः।**

निजगुणपरमाणूनां पर्वताकारतया वर्णनं नामात्मश्लाघा, न तु वस्तुस्थित्या। अत एव दशमाध्याये गीतायां स्वविभूतिदिग्दर्शनं जिगन्निवासस्य संगच्छते। इत्थमेव च '**रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत्**' इति दृश्यकाव्ये कृतो नियमस्संघटते। इत्थमत्र जनश्रुतिः श्रीहर्षः काश्मीरान् गत्वा नैषधपुस्तकं सरस्वतीदेव्याः करकमले समर्पणञ्चकार। सरस्वत्या पुस्तकं गृहीत्वा धरायां प्रक्षिप्तमतः श्रीहर्षः कथं प्रक्षिपसि मे पुस्तकमिति तां पप्रच्छ। सरस्वती प्राह—अत्र काव्यस्य त्वयैकादशे सर्गे—

**'देवी पवित्रितचतुर्भुजवामभागा**
**वागालयात्पुनरिमां गरिमाभिरामाम्।**
**अस्यारिनिष्कृपकृपाणसनाथपाणेः**
**पाणिग्रहादनुगृहाण गणं गणानाम्॥'**

इति श्लोको लिखितः। श्रुत्वैतत् श्रीहर्ष उवाच—**किमर्थमेकस्मिन्नवतारे नारायणं प्रति चुक्रुषी त्वं पुराणेष्वपि विष्णुपत्नीति पठ्यसे ततः सत्ये किमिति कुप्यसि। कोपेन किं कलङ्कान्मुच्यसे**—इति। सरस्वति पुनः स्वेनैव हस्तेन पुस्तकं गृहीतवतीति धन्योऽयं कविः। कः खलु श्रीहर्षमन्तरेणैतादृशं वैदुष्यपूर्णं साहसं कर्त्तुं शक्नोति।

स्वभावोऽयं कविनां यत्तैः कृतानां कृतीनां नायकेषु तेषां स्वीया अपि गुणा निसर्गादेव सङ्क्राम्येन्ति। तैर्विहितमन्यवर्णनमपि यथाकथञ्चित्तेषामेव वर्णनं भवति। अनुभववैशिष्ट्यमेव काव्यवैशिष्ट्यमिति स्वीकारात्। अत एव एकमेव नायकमुद्दिश्य समुपक्रान्तेषु काव्येषु मिथस्तारतम्यं लभ्यते।

अस्य कवेर्नायिकस्य वर्णनमित्थमुपलभ्यते—

**अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम्।**
**अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम्॥**
**दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसरावरोधिनीम्।**
**बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम्॥**

वैरिणोऽपि यस्य गुणगणान् गणयितुं दर्शितादरा भवेयुः स एव वस्तुतो गुणी गण्यते। चिन्तामणिमन्त्रमहिम्नाधिगतसमस्तवाङ्मयतत्त्वः कविरयं स्वपितुः पराजयनिकारनिर्यातनार्थमधिक्षिपन् राज्ञः समक्षे वादाय यदाह्वयति प्रतिवादिनम्—

**साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले**
**तर्के वा मयि संविधातरि समं लीलायते भारती॥**
**शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता**
**भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्॥**

तदाधिक्षिप्तो हतप्रतिभश्च प्रतिवादी—

**हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्यता-**
**स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम्।**
**केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः**

**संहर्षो महिषैश्च यस्य मुमुचे साहङ्कृते हुङ्कृते ॥**

एवं कवेरस्य कोपं विलोपयन् समम्मानमभिदधाति ।

खण्डनखण्डखाद्याद्याः सन्दर्भाः, येऽधुनातिगहना मन्यन्ते, येषाञ्चाध्यायनाध्यापनादिहेतोरत एव विरलविरलं समजनि, अनेन कविना भारत्या **"मतिमान्द्यं मे स्यादिति"** वरमवाप्य सन्दृब्धाः, अतिविस्तृतेऽपि कविजनमतिकवेरस्यैव विषये जनश्रुतिरियं श्रूयते 'अनेन **मतिमान्द्यवृतमिति**' इत्यहो कविमूर्धन्यस्य धन्यता । अतो युक्तमुक्तं केनचित्—'**उदिते नैषधे काव्ये क्व माघः क्व च भारविः**' किं बहूक्त्येति विरमामि ।

नैषधे धीरोदात्तो नलो नायकः, नायिका च परकीया दमयन्ती, परस्परेक्षणादिचक्षुर्व्यापारादिक्रियाऽनुभावाः, निर्वेदादयो व्यभिचारिणः, हंसवाक्यादयस्तथा चन्द्रचन्दनादीनि उद्दीपनानि, रतिः स्थायी, शृङ्गारो रसः प्रधानः, तत्र सप्तदशसर्गपर्यन्तं विप्रलम्भाख्यस्य पूर्वो भेदः पूर्वरागाः, ततः सम्भोगशृङ्गारः । करुणादयोऽङ्गरसाः, वैदर्भी रीतिः, माधुर्यो गुणः, हंसो निसृष्टार्थरूपो दूतस्तस्य लक्षणं पूर्वोक्तमेव ।

## नलदूतं प्रति दयमन्त्युक्तिः

**मयापि देयं प्रतिवाचिकं न ते स्वनाममत्कर्णसुधामकुर्वते ।**
**परेण पुंसा हि ममापि संकथा कुले खलाचारसहासनासहा ॥'**

## दमयन्तीं प्रति नलोक्तिः

'**वामाक्षि परेषु माक्षिप स्वमीदृशं माक्षिकमाक्षिवद्वचः ।**'

इत्यादिना दौत्यकर्मकुर्वतो नलस्य स्वनामकथनेऽपि नानौचितिरुदेति । एवं हंसधारणेऽपि नलस्य कौशलमित्थम्—

'**विधाय मूर्तिकपटेन वामनीं स्वयं बलिध्वंसि विडम्बनीमयाम् ।**
**नृपः पतङ्गसमधत्तपाणिना कृतावरोहस्य हयादुपानहौ ॥'**

अधिकं तु पाठकैः छात्रैश्च तत्र तत्र ग्रन्थतोऽवधेयमिति ।

---

## संक्षिप्तकविसमयादिनिरूपणम्

| कविः | तत्समयः | तद्ग्रन्थाः |
|---|---|---|
| पाणिनिः | ई० पू० ७०० वर्षात् प्राक् | जाम्बवतीजयम्, वा पातालविजयकाव्यम्। |
| कालिदासः | ई० १ शताब्दी | रघुवंशादयः |
| शूद्रकः | ई० २ शताब्दी | मृच्छकटिकम्। |
| भारविः | ई० ६ शताब्द्या उत्तरभागः | किरातार्जुनीयम्। |
| भावभूतिः | ई० ७ शताब्दी | मालतीमाधवादि। |
| माघः | ई० ६६०-६७५ | शिशुपालवधम्। |
| बाणभट्टः | ई० ६ शताब्दी | कादम्बरी, हर्षचरितादि। |
| मयूरः | ई० ६ शताब्दी | सूर्यशतकम्। |
| भट्टिः | ई० ५३० | भट्टिकाव्यम्। |
| भर्तृहरिः | ई० ६५० | शृङ्गारशतकादि। |
| भासः | ई० पू० ४ शताब्द्याः प्राक् | वासवदत्तादि। |
| मुरारिः | ई० ९ श० पूर्वार्द्धः | अनर्घराघवम्। |
| जयदेवः | ई० १११६ | गीतगोविन्दम्। |
| दण्डीः | ई० ६ श० | दशकुमारचरितं काव्यादर्शश्च। |
| क्षेमेन्द्रः | ई० ११ श० | समयमातृका। |
| धनञ्जयः | ई० ९९४ | दशरूपकम्। |
| विशाखदत्तः | ई० ७-८ श० | मुद्राराक्षसम्। |
| सुबन्धुः | ई० ६०० | वासवदत्ता। |
| श्रीहर्षः | ई० १२ श० | नैषधादयः |
| वररुचिः | ई० ४०० पूर्वार्द्धात् प्राक् | वाररुचम्, वा कण्ठाभरणम्। |
| अश्वघोषः | ई० २ श० | बुद्धचरितादि। |

| | | |
|---|---|---|
| नारायणभट्टः | ई० ८५५-८८४ | वेणीसंहारः । |
| कल्हणः | ई० ११२९-११५० | राजतरङ्गिणी । |
| विल्हणः | ई० ११ श० | विक्रमाङ्कदेवचरितम् । |
| जगन्नाथपण्डितः | ई० १६२०-१६६० | रसगङ्गाधरादि । |
| विश्वनाथः | ई० १४ श० | साहित्यदर्पणादि । |
| मम्मटाचार्यः | ई० ११ श० | काव्यप्रकाशादि । |
| आनन्दवर्धनाचार्यः | ई० १० श० | ध्वन्यालोकः । |
| राजशेखरः | ई० १० श० | बालरामायणादि । |
| रत्नाकरः | ई० ८५५-८८८ | हरविजयमहाकाव्यम् । |
| वराहमिहिरः | ई० ८८७ | बृहत्संहिता । |
| भामहः | ई० ६ श० | काव्यालङ्कारः । |
| भट्टोद्भटः | ई० ७ श० | काव्यालङ्कारसंग्रहः । |
| रुद्रटः | ई० ८ श० | रुद्रटालङ्कारः । |
| वामनः | ई० ९ श० | वामनालङ्कारः । |
| वाग्भट्टः | ई० ९ श० | वाग्भट्टालङ्कारः । |
| महिमभट्टः | ई० १०२५ | व्यक्तिविवेकः । |
| भोजराजः | ई० १०१८-५६ | सरस्वतीकण्ठाभरणादि । |
| विद्याधरः | ई० १३ श० | एकावली । |
| केशवमिश्रः | ई० १६ श० | अलङ्कारशेखरः । |
| अप्पयदीक्षितः | ई० १५९३ | कुवलयानन्दादि । |
| मुकुलभट्टः | ई० ९२० | अभिधावृत्तिमातृका । |
| विद्याभूषणः | ई० १८श० | साहित्यकौमुदी । |
| हर्षवर्धनः | ई० ६०६-६५८ | नागानन्दादि । |
| शङ्कराचार्यः | ई० ८०० | ब्रह्मसूत्रशाङ्करभाष्यादि । |
| शंकुकः | ई० ८५० | भुवनाभ्युदयः । |
| घटखर्परः | ई० ५०० | घटखर्परकाव्यम् । |

| | | |
|---|---|---|
| भरतमुनिः | ई० पू० २ श० | नाटचशास्त्रादि । |
| अभिनवगुप्तः | ई० १००० ल० भ० | ध्वन्यालोकलोचनादि। |
| त्रिविक्रमभट्टः | ई० ९१५ | नलचम्पूप्रभृतयः । |
| वि० भू० बालकृष्णभट्टः | ई० २० श० | जगदम्बाशतकं, साहित्यकल्पकलिका, स्वतन्त्रभारतं, शिवशारदशतके, कनकवंशमहाकाव्यं, स्वामितपोवनशतकम् आत्मदर्शनं चेत्यादि । |

**चन्द्रग्रहाङ्कविधुसंज्ञकवत्सरेऽयम्,**
**मासे शुचौ शिवतिथौ शिवभावुकेन ।**
**विद्यार्थिनां हितधिया गढ़देशजेन,**
**श्रीबालकृष्णकविना विहितः प्रबन्धः ।।**

इति वि० भू० दर्शनकेशरी-श्रीबालकृष्णभट्टसाहित्याचार्यकाव्यतीर्थ
कृतकाव्यपदार्थविवृतिकविसमयादिनिरूपणात्मके काव्यप्रब-
ः धेऽत्रोत्तरपीठिका पूर्णतामगमत् ।
समाप्तश्चाऽयं ग्रन्थः ।

## कतिपय परीक्षोपयोगी प्रश्नोत्तरात्मक-ग्रन्थ

साहित्यदर्पणालोकः ( प्रश्नोत्तरात्मकः )। श्री रामजी लाल शर्मा १२-००
काव्यप्रकाश-रहस्यम् ( प्रश्नोत्तरात्मकः )। श्री रामजी लाल शर्मा १२-५०
चन्द्रालोक-रहस्यम् ( प्रश्नोत्तरात्मकः )। मानवल्ली तथा वेताल १०-०
शिशुपालवध-रहस्यम् (प्रश्नोत्तरात्मकः)। १-४ सर्ग। अशोकचन्द्र गौड़ १०-००
सांख्यकारिकादर्शः ( प्रश्नोत्तरात्मकः )। श्री राजेन्द्रप्रसाद कोठयारी ६-५०
अलङ्कारशास्त्रस्येतिहासः ( प्रश्नोत्तरात्मकः )। श्रीपरमेश्वरदीन पाण्डेय ६-००
नलचम्पू-रहस्यम् (प्रश्नोत्तरात्मकः)। १-५ उच्छ्वास। परमेश्वरदीन पाण्डेय ८-०
वेदान्तसार-प्रदीपः ( प्रश्नोत्तरात्मकः )। श्री राजेन्द्रप्रसाद कोठयारी ६-
मध्यसिद्धान्तकौमुदी-चन्द्रिका (प्रश्नोत्तरात्मकः)। विजयमित्र शास्त्री २५-०
मृच्छकटिक-सोपानम् ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा १०-५
वेणीसंहार-रहस्यम् ( प्रश्नोत्तरात्मकः )। श्री परमेश्वरदीन पाण्डेय ८-००
नैषध-रहस्यम् ( प्रश्नोत्तरात्मकः )। १-५ सर्ग। श्री रमाशंकर मिश्र १४-०
दशरूपक-रहस्यम् ( प्रश्नोत्तरात्मकः )। श्री त्रिलोकनाथ द्विवेदी १०-००
भट्टिकाव्य-दर्पणः ( प्रश्नोत्तरात्मकः )। श्री प्रज्ञान भिक्षु। १-४ सर्ग १०-००
५-८ सर्ग १०-००
भट्टिकाव्यालोकः (प्रश्नोत्तरात्मकः)। रमाशंकर त्रिपाठी। १४-१७ सर्ग १०-००
१८-२२ सर्ग १०-००
चन्द्रकला-नाटिकारहस्यम् ( प्रश्नोत्तरात्मकः )। श्री परमेश्वरदीन पाण्डेय ३-५
संस्कृतसाहित्येतिहासः ( प्रश्नोत्तरात्मकः )। श्री परमानन्द शास्त्री ७-५०
रसगङ्गाधर-हृदयम् ( प्रश्नोत्तरात्मकः )। श्री ज्ञानचन्द्र त्यागी १२-५०
लघुसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः )। विजयमित्र शास्त्री १५-०
कादम्बरी-कला-प्रकाशः ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा १२-०
लघुमञ्जूषारहस्यम् ( प्रश्नोत्तरात्मकः )। स्वामी रामेश्वर पुरी ५-
मुद्राराक्षसम् ( प्रश्नोत्तरात्मकः )। श्री लोकमणि दहाल १२.
शाकुन्तलरहस्यम् ( प्रश्नोत्तरात्मकः ) श्री त्रिलोकीनाथ द्विवेदी १२-
मेघदूत-तत्त्वालोकः। डॉ० अशोकचन्द्र गौड़ शास्त्री ७-
महाभाष्य-प्रदीपः ( प्रश्नोत्तरात्मकः )। श्री विजयमित्र शास्त्री १०-
मुक्तावली-प्रकाशः ( न्यायसिद्धान्तमुक्तावली-प्रश्नोत्तरी )।
श्री राजेन्द्रप्रसाद कोठयारी १०.
औचित्यविचारचर्चा-मञ्जरी ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा ८.
वक्रोक्तिजीवितम् ( प्रश्नोत्तरात्मकः )। डॉ० नरेश झा ७.
विक्रमांकदेवचरितम् ( प्रश्नोत्तरात्मकः )। डॉ० अशोकचन्द्र गौड़ ६

